भ्रास्यते । भ्रासते । भ्रेसे । बभ्रासे । भ्लास्यते । भ्लासते । भ्लेसे। बभ्लासे । रासृङ् णासृङ् शब्दे । १६७ ॥ णसि कौटिल्ये ।१६८॥ भ्यसि भये । १६९ ॥ आङ् शसुङ् इच्छायाम् । १७० ॥ आशसते । ग्रसूङ् ग्लसूङ् अदने । १७१ ॥ घसुङ् करणे । १७२ ॥ मूर्द्धन्यान्तोऽप्ययमित्येके । ईहि चेष्टायाम् । १७३ ॥ अहुङ् प्लिहि गतौ । १७४ ॥ आनहे। गर्हि गल्हि कुत्सने । १७५ ॥ वर्हि वल्हि प्राधान्ये । १७६ ॥ वर्हि वल्हि परिभाषणहिंसाच्छादनेषु ।१७७॥
१ दानेऽप्यन्ये । अवल्हिढ्वम् । अवल्हिध्वम् । वेहृङ् जेहृङ् वाहृङ् प्रयत्ने । १७८ ॥ द्राहृङ् निक्षेपे । १७९ ॥ निद्राक्षेप इत्येके । ऊहि तर्के । १८० ॥ गाहौङ् विलोडने । १८१ ॥ अगाहिष्ट । अगाढ । गाहिषीष्ट । घाक्षीष्ट । गाहिता । गाढा । गाहिष्यते । घाक्ष्यते । ग्लाहौङ् ग्रहणे । १८२ ॥ ग्लाहिता । ग्लाढा । गृहौङ् इत्येके । अगर्हिष्ट । अघृक्षत ।

स्वरेऽतः ॥ ४ । ३ । ७५ ॥

सकः प्रत्यये लुक् ॥ अघृक्षाताम् । अघृक्षन्त । गर्हिषीष्ट ॥

सिजाशिषावात्मने ॥ ४ । ३ । ३५ ॥

नाम्युपान्त्ये धातोरनिटौ किद्वत् । घृक्षीष्ट ॥ ग्रहुङ् ग्लहुङ् ग्रहणे । १८३ ॥ दक्षि शैघ्र्ये च । १८४ ॥ धुक्षि धिक्षि सन्दीपनक्लेशनजीवनेषु । १८५ ॥ वृक्षि वरणे । १८६ ॥ शिक्षि विद्योपादाने । १८७ ॥ भिक्षि याच्ञायाम् । १८८ ॥ दीक्षि मौण्ड्ये-

ज्योपनयननियमव्रतादेशेषु । १८९ ॥ अदीक्षिष्ट । ईक्षि दर्शने । १९० ॥ ऐक्षत । ऐक्षिष्ट । ईक्षाञ्चक्रे ॥

॥ इत्यात्मनेपदिन. ॥

॥ अथोभयपदिन ॥

श्रिग् सेवायाम् १॥ श्रयति । श्रयते । णिश्रीति ङे, अशिश्रियत् । अशिश्रियत । शिश्राय । शिश्रिये । श्रीयात् । श्रयिषीष्ट । श्रयिता २ । श्रयिष्यति । श्रयिष्यते । अश्रयिष्यत् । अश्रयिष्यत । णींग् प्रापणे २ । निनयिथ । निनेथ । निन्यिषे । हृग् हरणे । ३ ॥ हरति । हरते । अहार्षीत् । अहार्ष्टाम् । अहृत । अहृषाताम् । अहृषत । जहर्थ । जह्रिव । जह्रे । जह्रिषे । ह्रियात् । हृषीष्ट । हर्ता । हरिष्यति । हरिष्यते । भृग् भरणे । ४ ॥ अभार्षीत् । अभृत । बभृव । बभृम । बभृषे । धृग् धारणे । ५ ॥ अधार्षीत् । अधृत । डुकृग् करणे । ६ ॥

कृग्तनादेरु ॥ ३ । ४ । ८३ ॥

कर्तरि विहिते शिति ॥ अयं तनादौ पाठार्होऽप्यत्र सिचो लुप् ह्रस्वादिति नित्यलुगर्थं पठित शवर्थं चेति लघुन्यासकार । तेन करति कुरुते इत्याद्यपि भवति ॥ उश्नोरिति गुणे, करोति ॥

अत शित्युत् ॥ ४ । २ । ८९ ॥

शित्यविति य उस्तन्निमित्तस्य कृगोऽत उत् ॥ कुरुतः ।

उकारविधानसामर्थ्याद्गुणो न । कुर्वन्ति । करोषि । कुरुथः । कुरुथ । करोमि ॥

कृगो यि च ॥ ४ । २ । ८८ ॥

यमि चाविति उतो लुक् ॥

कुरुच्छुर ॥ २ । १ । ६६ ॥

नामिनो रे दीर्घो न ॥ कुर्वः । कुर्मः । कुर्वित्युकारः किम्? । कुरत् शब्द इत्यस्य कूर्यात् । केचिदस्यापि प्रतिषेधमिच्छन्ति । कुर्यात् । करोतु । कुरुतात् । कुरुताम् । कुर्वन्तु ॥

असंयोगादोः ॥ ४ । २ । ८६ ॥

प्रत्ययाद्धेर्लुक् ॥ कुरु । कुरुतात् । अकरोत् । अकार्षीत् । चकर्थ । क्रियात् । कुरुते । कुर्वीत । कुरुताम् । अकुरुत । अकृत । चक्रे ॥

संपरेः कृगः स्सट् ॥ ४ । ४ । ९१ ॥

आदिः ॥ सस्करोति ॥

असोङसिवूसहस्सटाम् ॥ २ । ३ । ४८ ॥

परिनिविभ्यः परेषां स षः ॥ परिष्करोति । भूषासमवाययोरेवेच्छन्त्येके । पूर्वं धातुरुपसर्गेण सम्बध्यते पश्चात् साधनेनेति द्विर्वचनादडागमाच्च पूर्वं स्सडेव । सचस्कार । सचस्करिथ । समस्करोत् ।

उपाद्भूषासमवायप्रतियत्नविकारवाक्याऽध्याहारे ॥ ४ । ४ । ९२ ॥

कृग आदिस्सट् ॥ उपस्करोति कन्याम् । तत्र न उपस्कृतम् ।

पयोदकस्योपस्कुरुते । उपस्कृत भुङ्क्ते । सोपस्कारं सूत्रम् । डिवरी अव्यक्ते शब्दे । ७ ॥ अव्यूग् गतौ च । ८ ॥ दुयाचृग् याञ्चायाम् । ९ ॥ ड्डियामित्येके । डुपचींष् पाके । १० ॥ अपाक्षीत् । अपक्त । राजृग् टुभ्राजी दीप्तौ । ११ ॥ रेजतुः । रराजतुः । भ्रेजतु. । बभ्राजतु. । भ्राजेरिह पाठ' फत्वविधानस्यैव ग्रहणार्थं । पसमेवाविकल्प्य पुन पाठ आत्मनेपदानित्यत्वज्ञापनार्थ. । तेन सेवति, सेवते इत्यादि सिद्धम् । भजीं सेवायाम् । १२ ॥ बभाज । भेजे । रञ्जीं रागे । १३ ॥

## अकटूघिनोश्च रञ्जे ॥ ४ । २ । ५० ॥

शव्युपान्त्यनो लुक् ॥ रजति । रजते । व्यञ्जनानामनिटीत्यत्र बहुवचनस्य तात्पर्यत्वादत्रापि वृद्धौ, अराङ्क्षीत् । अरङ्क्त । रेट्ग् परिभाषणयाचनयो । १४ ॥ वेणृग् गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु।१५॥ नान्तोऽप्ययमिति केचित्। चतेग् याचने ।१६॥ अचतीत् । अचतिष्ट । मोधृग् पर्याप्तौ । १७ ॥ मिथृग् मेधाहिंसनयो । १८ ॥ मेधृग् सङ्गमे च । चदेग् याचने । २० ॥ उबुन्दृग् निशामने । २१ ॥ अबुदत् । अबुन्दीत् । अबुन्दिष्ट । धान्तोऽयमिति नन्दी । णिदृग् णेदृग् कुत्सासन्निकर्षयो । २२ ॥ मिदृग् मेदृग् मेधाहिंसयो । २३ ॥ मेधृग् सङ्गमे च । २४ ॥ शृधूग् मृधूग् उन्दे । २५ ॥ बुधृग् बोधने । २६ ॥ अबुधत् । अबोधीत् । अबोधिष्ट । खनूग् अवदारणे । २७ ॥ गमहनेत्यलुकि चख्नतु । चख्ने । दानी अवखण्डने । २८ ॥ आर्जवे दीदांसति । दीदांसते । शानी तेजने । २९ ॥ निशाने शीशांसति ।

शीशांसते। अर्थान्तरे तु सनोऽभावे प्रत्ययान्तराण्यपि। शपींग् आक्रोशे।३०॥ अशाप्सीत्। अशप्त।चायृग् पूजानिशामनयोः।३१॥ व्ययी गतौ। ३२॥ अव्ययीत्। अव्ययिष्ट। अली भूषणपर्याप्तिवारणेषु।३३॥ धावूग् गतिशुध्योः।३४॥ चीवृग् ऋपीवत्।३५॥ अन्नदिदपमित्येके। दाशृग् दाने। ३६॥ ऋपी आदानसंवरणयोः। ३७॥ भेषृग् भये। ३८॥ भ्रेषृग् चलने च। ३९॥ पषी बाधनस्पर्शनयोः। ४०॥ सान्तोऽयमित्येके। लषी कान्तौ। ४१॥ अभिलष्यति। अभिलषति। अभिलष्यते। अभिलषते। चषी भक्षणे। ४२॥ छषी हिंसायाम्। ४३॥ चच्छाष। चच्छषे। त्विषी दीप्तौ। ४४॥ अत्विक्षत्। अत्विक्षत। अषी असी गत्यादानयोश्च। ४५॥ दासृग् दाने। ४६॥ माहृग् माने। ४७॥ गुहौग् संवरणे। ४८॥

## गोहः स्वरे॥ ४। २। ४२॥

उपान्त्यस्योत्॥ निगूहति। निगूहते। न्यगूहीत्। इडभावे सकि। न्यघुक्षत्। न्यगूढिष्ट। पक्षे।

## दुहदिहलिहगुहो दन्त्यात्मने वा सकः ॥४।३।७४॥

लुक्॥ न्यगूढ। न्यघुक्षत। जुगूह। जुगुहे। गुह्यात्। गूहिषीष्ट। घुक्षीष्ट। गूहिता २। गोढा २। गूहिष्यति। घोक्ष्यति। गूहिष्यते। घोक्ष्यते। अगूहिष्यत्। अघोक्ष्यत्। अगूहिष्यत। अघोक्ष्यत। भक्षी भक्षणे। ४९॥ भक्षीत्यन्ये॥

॥ अथ द्युतादयः ॥

द्युति दीप्तौ । १ ॥ द्योतते ॥

द्युद्भ्योऽद्यतन्याम् ॥ ३ । ३ । ४४ ॥

कर्त्तर्यात्मनेपदं वा ॥ अद्युतत् । अद्योतिष्ट ॥

द्युतेरिः ॥ ४ । १ । ४१ ॥

द्वित्वे सति पूर्वस्य ॥ दिद्युते । रुचि अभिप्रीत्यां च । २ ॥ अरुचत् । अरोचिष्ट । घुटि परिवर्त्तने । ३ ॥ रुटि लुटि लुठि प्रतीघाते । ४ ॥ ञिताङ् वर्णे । ५ ॥ ञिमिदाङ् स्नेहने । ६ ॥ ञिष्विदाङ् ञिक्ष्विदाङ् मोचने च । ७ ॥ शुभि दीप्तौ । ८ ॥ क्षुभि सञ्चलने । ९ ॥ णभि तुभि हिंसायाम् । १० ॥ स्रम्भूङ् विश्वासे । ११ ॥ असभत् । अस्रम्भिष्ट । भ्रंशूङ् स्रंसूङ् अवस्रंसने । १२ ॥ ध्वंसूङ् गतौ च । १३ ॥ द्युताद्यन्तर्गणो वृतादिपञ्चकः । वृतूङ् वर्त्तने । १४ ॥ अवृतत् । अवर्त्तिष्ट ॥

वृद्भ्यः स्यसनोः ॥ ३ । ३ । ४५ ॥

कर्त्तर्यात्मनेपदं वा ॥ वर्त्तिष्यते । पक्षे ॥

न वृद्भ्यः ॥ ४ । ४ । ५५ ॥

परस्य स्ताद्यशित आदिरिण्न ॥ न चेदसावात्मनेपदनिमित्तम् ॥ वर्त्स्यति । स्यन्दौङ् स्रवणे । १५ ॥ अस्यदत् । अस्यन्दिष्ट ॥ अस्यन्त । स्यन्दिष्यते । स्यन्त्स्यते । स्यन्त्स्यति । औदिल्लक्षण इट्

विकल्प परत्वादनेन बाध्यते । अस्यन्दिष्यत । अस्यन्त्स्यत । अस्यन्त्स्यत् ॥

## निरभ्यनोश्च स्यन्दस्याप्राणिनि ॥ २ । ३ । ५० ॥

परिनिवे० सः षु वा ॥ निःष्यन्दते । निःस्यन्दते वा तैलम् । अप्राणिकर्तृकार्थवृत्तेरिति किम् ? । परिस्यन्दते मत्स्यः । दृधूङ् वृद्धौ । १६ ॥ शृधूङ् शब्दकुत्सायाम् । १७ ॥ कृपौङ् सामर्थ्ये । १८ ॥

## ऋरलृलं कृपोऽकृपीटादिषु ॥ २ । ३ । ९९ ॥

कल्पते । अक्लृपत् । अकल्पिष्ट । अक्लृप्त । चक्लृपे । चक्लृपिषे । चक्लृप्से ॥

## कृपः श्वस्तन्याम् ॥ ३ । ३ । ४६ ॥

कर्त्र्यात्मनेपदं वा ॥ कल्प्तासि । कल्पितासे । कल्प्तासे ॥ इति द्युतान्तर्गणो वृतादि ॥

॥ इति द्युतादि ॥

---

॥ अथ ज्वलादि ॥

---

ज्वल दीप्तौ ॥१॥ ज्वलति । कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । २ ॥ पत्लृ पथे गतौ । ३ ॥

## श्वयत्यसूवचपतः श्वास्थवोचपप्तम् ॥४।३।१०३॥

अङि यथासङ्ख्यम् ॥ लृदित्वादङ् । अपप्तत् । अपपीत् । बभूव

निष्पाके। ४ ॥ मये विलोडने। ५ ॥ षद्लृ विशरणगत्यवसादनेषु। ६ ॥ श्रौतीत्यादिना सीदादेशे सीदति । असदत् । सेदिथ । ससत्थ । सत्ता । सत्स्यति ।

## सदोऽप्रते. परोक्षायां त्वादे. ॥ २ । ३ । ४४ ॥

उपसर्गस्थान्नाम्यादे स. ष् ॥ द्वित्वेऽप्यट्यपि । निषीदति । न्यषीदत् । निषिषत्सति । निषसाद । अप्रते किम् ? । प्रतिसीदति । शद्लृ शातने । ७ ॥

## श्यदे शिति ॥ ३ । ३ । ४१ ॥

कर्त्तर्यात्मनेपदम् ॥ शीयते । अशदत् । शत्ता । शत्स्यति । बुध अवगमने । ८ ॥ अबोधीत् । अनुस्वारेदयमित्येके । तन्मते, अभौत्सीत् । टुवमू उद्गिरणे ।९॥ वेमतु । ववमतु । भ्रमू चलने ।१०॥ भ्रम्यति । भ्रमति । भ्रेमतु । बभ्रमतु. । क्षर सञ्चलने । ११ ॥ सकर्माऽकर्मा चायम् । अक्षारीत् । चल कम्पने ।१२॥ जल घात्ये। १३ ॥ टल ट्वल वैक्लव्ये । १४ ॥ ष्ठल स्थाने । १५ ॥ अषोपदेशोऽयमित्यन्ये । हल विलेखने । १६ ॥ णल गन्धे । १७ ॥ बल प्राणनधान्यावरोधयो । १८ ॥ बेलतु । पुल महत्त्वे । १९ ॥ कुल बन्धुसंस्त्यानयो. । २० ॥ पल फल शल गतौ । २१ ॥ फेलतु. । फलिशल्यो. पुन. पाठो ज्वलादिकार्यार्थ । शले परस्मैपदार्थश्च । हुल हिंसासंवरणयोश्च । २२ ॥ क्रुशं आह्वानरोदनयो । २३ ॥ अक्रुक्षत् । क्रोष्टा । कस गतौ । २४ ॥ रुह जन्मनि। २५ ॥ बीजजन्मनीत्यन्ये । अरुहत् । रोढा । रमि क्रीडायाम् ।

२६ ॥ षहि मर्षणे । २७ ॥ असोङेत्यादिना षत्वे, परिषहते । असोङेति निषेधात्, परिसोढ. । ङे, मा परिसीषहत् ॥

## स्तुस्वञ्जश्चाटि न वा ॥ २ । ३ । ४९ ॥

परिनिविभ्योऽसोङसिवुसहस्सटां स ष ॥ पर्यषहत । पर्यसहत । असहिष्ट । सहिषीष्ट । सहिता ॥

## सहिवहेरोश्चावर्णस्य ॥ १ । ३ । ४३ ॥

दस्य तड्ढे परेऽनु लुक् ॥ सोढा ॥

॥ इति ज्वलादि. ॥

---

॥ अथ यजादय. ॥

---

एते भित्वदवर्जा अनिट ॥ यजिं देवपूजासङ्गतिकरणदानेषु ।१। यजति । यजते । अयाक्षीत् । अयष्ट ॥

## यजादिवश्वच. सस्वरान्त स्था य्वृत् ॥४।१।७२॥

परोक्षायां द्विर्वे पूर्वस्य यथ्यामथ्या ॥ इयाज ॥

## यजादिवचे किति ॥ ४ । १ । ७९ ॥

सस्वरान्तस्था य्वृत् ॥ ईजतु. । ईजु । इयजिथ । इयष्ट ईजे । इज्यात् । यक्षीष्ट । यष्टा २ । यक्ष्यति । यक्ष्यते । ते तन्तुसन्ताने । ७ ॥ वयति । अवासीत् ॥

## येवंयः ॥ ४ । ४ । १९ ॥

परोक्षायां वा ॥ उवाय । किति य्वृति ॥

## न वयोय् ॥ ४ । १ । ७३ ॥

वेगः परोक्षायां य्वृत् ॥ ऊयतुः । उवयिथ । वयादेशाभावे ॥

## वेरय. ॥ ४ । १ । ७४ ॥

पूर्वस्य परस्य च परोक्षायां य्वृत् ॥ आत्सन्ध्यक्षरस्येत्यात्वे । ववौ । ववतुः ॥

## अविति वा ॥ ४ । १ । ७५ ॥

वेगोऽयन्तस्य परोक्षायां य्वृत् ॥ ववतु । ऊवतु । पक्षे द्वित्वे कृते परत्वादुवि समानदीर्घे, ऊवतु ॥

## य्वृत्सकृत् ॥ ४ । १ । १०२ ॥

अन्त स्यास्थानेम् ॥ इति पश्चाद्वकारस्य न य्वृत् । वविथ । ववाथ । ऊयात् । वासीष्ट । व्येंग् संवरणे । ३ ॥

## व्यस्थवृणवि ॥ ४ । २ । ३ ।

आत्व ॥

## ज्याव्ये व्यधिव्यचिव्यथेरि ॥ ४ । १ । ७१ ॥

परोक्षायां द्वित्वे पूर्वस्य ॥ इत्वे । विव्याय । विव्यतु. । विव्यथिथ । वीयात् । व्याता । व्ययते । अव्यास्त । विव्ये । ह्वेंग् स्पर्द्धाशब्दयो । ४ ॥ आह्वयति । आह्वयते ॥

## ह्वालिप्सिच. ॥ ३ । ४ । ६२ ॥

कर्त्तर्यद्यतन्यामङ् ॥ आह्वत् ॥

## वात्मने ॥ ३ । ४ । ६३ ॥

ह्वादेः कर्त्रर्थत्रतन्यामङ्॥ आहत । आह्वास्त ॥

द्वित्वे ह्वः ॥ ४ । १ । ८७ ॥

सस्वरान्त स्था य्वृत् ॥ आजुहाव । आजुहुवतुः। आजुहविथ। आजुहोथ। जुहुवे। डुवपीं बीजसन्ताने । ५॥ छेदने च । अवाप्सीत् । अवप्त । उवाप । ऊपे । उप्यात् । वप्सीष्ट । वहीं प्रापणे । ६ ॥ अवाक्षीत् । अवोढाम् । अवोढ । अवक्षाताम् । उवाह । उवहिथ । उवोढ । ऊहे । उह्यात् । वक्षीष्ट । वोढा २। वक्ष्यति, ते । अथ त्रयः परस्मैपदिन । टुओश्वि गतिवृद्ध्योः । ७॥ श्वयति । दूश्वेर्वा इति वा के द्वित्वे । अशिश्वियत् । पक्षे ऋदिच्छ्वीत्यादिनाऽङि श्वादेशे । अश्वत् । पक्षे । अश्वयीत् ॥

वा परोक्षायङि ॥ ४ । १ । ९० ॥

श्वे सस्वरान्तःस्था य्वृत् ॥ शुशाव । शुशुवतुः । शुशविथ । पक्षे । शिश्वाय । शिश्वियतुः । शिश्वयिथ । शूयात् । श्वयिता ॥ वद व्यक्तायां वाचि । ८ ॥ वदति । वदव्रजेति वृद्धौ । अवादीत् । उवाद । ऊदतुः । उद्यात् । वदिता । वस निवासे । ९ ॥ वसति । अवात्सीत् । अवात्ताम् । सस्त सीति सूत्रे विषयसप्तमीविज्ञानादन्न सलोपात्प्रागेव तः । उवास । ऊषतुः । उष्यात् । वत्स्यति ।

॥ इति यजादि ॥

॥ अथ घटादि ॥

घटिष् चेष्टायाम् । १ ॥ घटते । घटादित्वफले तु घटयती-

त्यादौ ह्रस्वादिकम् । घटादीनामनेकार्थत्वेऽपि पठितार्थेष्वेव घटादि कार्यविज्ञानम् । तेनार्थान्तरे उद्घाटयतीत्यादौ न ह्रस्व । विघटयतीति तु करोत्यर्थे णिचि रूपम् । स्कुद् गतिदानयो' । २ ॥ अस ङ्क्षिप्ट । सख्यादेः स्वरस्यानुपान्त्यत्वेऽपि पाठसामर्थ्यात् विभाषा दीर्घो भवत्येव । असखि । असाखि । व्यथिष् भयचलनयो. । ३ । विव्यथे । मथिष् माल्याने । ४ ॥ म्रदिष् मर्दने । ५ ॥ स्खदिं स्खदने । ६ ॥ क्दुङ् क्लदुङ् क्लुदुङ् वैक्लव्ये । ७ ॥ क्रपि कृपायाम ८ ॥ ञित्वरिष् सम्भ्रम । ९ ॥ प्रथिष प्रस्तारे । १० ॥ म्रसं इत्यन्ये । दक्षि हिंसागत्यो । ११ ॥ श्रां पाके । १२ ॥ स्न आप्याने । १३ ॥ स्मरति । दृ भये । १४ ॥ दरति । दृ विदारणे इति क्र्यादिषु पठिष्यमाणस्यापि भये घटादिकार्यार्थमिह पाठ । एव मुत्तरत्रापि । नॄ नये । १५ ॥ क्र्यादिरयम् । ष्टक स्तक प्रतीघाते । १६ ॥ स्तकति । चक तृप्तौ च ।' १७ ॥ अयमात्मनेपद्यपि । अक कुटिलायां गतौ १८ ॥ कखे हसने । १९ ॥ अकखीत् । अग अकवत् । २० । रगे शङ्कायाम् । २१ ॥ लगे सङ्गे । २२ ॥ ह्रगे ह्लगे षगे सगे ष्ठगे स्थगे संवरणे । २३ ॥ वट भट परिभाषणे । २४ ॥ णट नृत्तौ । २५ ॥ गड सेचने । २६ ॥ गडति । लत्वे गलति । हेट वेष्टने । २७ ॥ हिडयति । लड जिह्वोन्मथने । २८ ॥ लडति । लत्वे ललति । फण रण रण गतौ । २९ ॥ फेणतु ॥ चण हिंसादानयोश्च । ३० ॥ शण श्रण दाने । ३१ ॥ स्नथ क्नथ क्रथ क्लथ हिंसार्थाः । ३२ ॥ क्रथयति । चौरस्योत्क्राथ-

यतीति तु यौजादिकस्य घञन्ताद्वा णिच् । छद ऊर्जने । ३३ ॥ छदण् संवरणे इति चुरादिरयम् ॥ मदै हर्षग्लपनयोः । ष्टन स्तन ध्वन शब्दे । ३५ ॥ स्वन अवतंसने । ३६ ॥ चन हिंसायाम् । ३७ ॥ ज्वर रोगे । ३८ ॥ चल कम्पने । ३९ ॥ ह्मल म्मल चलने । ४० ॥ ज्वल दीप्तौ च । ४१ ॥ केचित्तु दलि वलि स्खलि क्षपि त्रपीणामपि घटादित्वमिच्छन्ति ॥ वृत् घटादिः । भ्वादिराकृतिगणस्तेन चुलुम्पतीत्यादिसङ्ग्रहः ॥

॥ इति घटादिः ॥

## ॥इति भ्वादयो निरनुबन्धा धातवः॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराम-विधितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलामिलिन्दायमानान्तेवासिसविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजय-नेमिसूरिविरचितायां लघुहेमप्रभायामुत्तरार्द्धे भ्वादिगण ॥

## ॥ अथादादय ॥

अद् प्साक् भक्षणे । १ ॥ अनद्यतन इति पूर्वस्य वृद्धिः । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः । अद्यात् । अत्तु । अत्तात् ॥

हुधुटो हेर्धिः ॥ ४ । २ । ८३ ॥

अद्धि ॥ अदानि ॥

## अदेर्घ्लाद् ॥ ४ । ४ । १० ॥

स्त्यक्षकारिस्योः शितोरादिः ॥ आदत् । आद ॥

## घस्लृ सनद्यतनीघञचलि ॥ ४ । ४ । १७ ॥

अदे ॥ अघसत् ॥

## परोक्षायां न वा ॥ ४ । ४ । १८ ॥

अदेर्घस्लृ ॥ जघास । जक्षतु । जघसिथ । पक्षे आद । आदतु । आदिथ । प्साति । अप्सात् ॥

## वा द्विषातोऽनः पुस् ॥ ४ । २ । ९१ ॥

शितोऽवित ॥ अप्सु. । अप्सान । अप्सासीत् । पप्सौ । भाङ् दीप्तौ । २ ॥ अभासीत् । बभौ । बभिथ । बभाथ । याङ् मापणे । ३ ॥ वाङ् गतिगन्धनयो । ४ ॥ ष्णाङ् शौचे । ५ ॥ सस्नौ । श्राङ् पाके । ६ ॥ द्रांङ् कुत्सितगतौ । ७ ॥ प्राङ् रक्षणे । ८ ॥ लाङ् आदाने । ९ ॥ राङ् दाने । १० ॥ दांङ् लवने । विच्यास दासद्रा । तेन अदासीत् । दायात् । ख्याङ् प्रकथने । १२ ॥ प्रकटन इत्यन्ये । आख्याति ॥

## शास्त्यसू वक्तिख्यातेरङ् ॥ ३ । ४ । ६० ॥

कर्तर्यद्यतन्याम् ॥ अस्यतेः पुष्यादित्वादङि सिद्धेऽपि 'वचनमात्मनेपदार्थम् । आख्यत् । आख्यताम् । आचख्यौ । माङ् पूरणे । १३ ॥ माङ् माने । १४ ॥ मेयात् । इङ् स्मरणे ।१५॥ इङिकावधिनैव प्रयुज्येते । अध्येति । अधीत ॥

इको वा ॥ ४ । ३ । १६ ॥

स्वरादावविति शिति यः॥ अधियन्ति। पक्षे इयादेशे अधीयन्ति । अधीयात् । अध्येतु । अधीहि । अध्ययानि ॥

एत्यस्तेर्वृद्धिः ॥ ४ । ४ । ३० ॥

आदेर्ह्यस्तन्यां विषयेऽमाङा॥ यत्वाल्लुगपवादोऽयम्। अध्यैत्। अध्यैताम्। अध्यायन्। पक्षे अध्यैयन्। पिवैतिदेति सिज्लुपि ।

इणिकोर्गा. ॥ ४ । ४ । २३ ॥

अद्यतन्याम् ॥ अध्यगात्। अध्यगाताम्। अध्यगुः । अधीयाय। अधीयतु । अधीययिथ । अधीयेथ । अधीयात्। अध्येता । इण्क् गतौ । १६ ॥ एति । इत ॥

ह्विणोरप्विति व्यौ ॥ ४ । ३ । १५ ॥

नामिन स्वरादौ शिति यथासङ्ख्यम्॥ यन्ति। अप्वितीति किम्? । अजुहवुः । अयानि । इयात् । ऐत् । अगात् । इयाय ॥

इण. ॥ २ । १ । ५१ ॥

स्वरादौ प्रत्यये इय् ॥ यापवादः। वर्णात्प्राकृत बलीय इति न्यायात् पूर्वमियादेशे दीर्घ । ईयतुः । पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानित्यनेन योऽनेकस्वरस्येत्येव बाध्यते न तु गुणवृद्ध्यादयस्तेन अयनम्, आयक यन्ति इत्यादि सिद्धम्। ईयात्।

आशिषीण ॥ ४ । ३ । १०७ ॥

उपसर्गात्परस्य ईतः क्ङिति यादौ ह्रस्वः ॥ उदियात्। इकोऽप्य-

धियादित्यन्ये। दीर्घे सति उपसर्गात्परस्येणोऽभावाच ह्रस्व। अभीयात्‌। ईइण इति प्रश्लेष किम्‌? समेयात्‌। समीयादिति तु भौवादिकस्य। धींङ्‌ भजनक्षान्त्यसनखादने च। १७॥ वेति। इङ्‌ ईंक्‌ इति प्रश्लेष। एति। ईतः। इयन्ति। ईयात्‌। ऐषीत्‌। युक्‌ अभिगमने। १८॥

## उत और्विति व्यञ्जनेऽद्वे ॥ ४। ३। ५९ ॥

धातो प्रत्यये॥ यौति। युत। युवन्ति। पुक्‌ प्रसवैश्वर्ययो। ।१९॥ सौति। सुयात। तुक्‌ वृत्तिहिंसापूरणेषु। २०॥

## यङ्‌तुरुस्तोर्बहुलम्‌ ॥ ४। ३। ६४ ॥

अद्वेर्व्यञ्जनादौ विति ईत्‌ परादि॥ तवीति। तौति। तुत। तुवन्ति। युक्‌ मिश्रणे। २१॥ यौति। अयावीत्‌। णुक्‌ स्तुतौ। २२॥ नौति। अन्ये तु युग्‌ णुग्‌ भ्याम्‌ व्यञ्जनादौ विति शिति ईतमपीच्छन्ति। यवीति। नवीति। केचित्तु तुत तुवीत। तुयात्‌ तुवीयात्‌ इति सर्वत्र ईत्‌ इत्याहु। अनावीत्‌। क्ष्णुक्‌ तेजने। २३॥ स्नुक्‌ प्रस्रवणे।२४॥ टुक्षु रु कुङ्‌ शब्दे।२५॥ क्षौति। अक्षावीत्‌। रौति। रवीति। अरावीत्‌। अकौषीत्‌। रुदक्‌ अश्रुविमोचने। २६॥

## रुत्पञ्चकाच्छिदय ॥ ४। ४। ८८ ॥

व्यञ्जनादेरादिरिट्‌॥ रोदिति। रुदित। रुदन्ति। रुद्यात्‌। रोदितु॥

## दिस्योरीट्‌ ॥ ४। ४। ८९ ॥

रुत्पञ्चकाच्छितोरादि॥ अरोदीत्‌। पक्षेऽदश्चाडित्यडागमे। अरोदत्‌। अरुदिताम्‌। अरुदन्‌। अरोदीत्‌। अरुदत्‌। रुरोद।

रोदिता । ञिष्वपक् शये । २७ ॥ स्वपिति । स्वप्यात् । अस्वाप्सीत् । भूस्वपोरिस्तुत्वे । सुष्वाप ॥

स्वपेर्यङ्के च ॥ ४ । १ । ८० ॥

किति सस्वरान्त स्या य्वृत् ॥ सुषुपतुः । सुष्वपिथ । सुष्वप्थ ॥

अवः स्वप ॥ २ । ३ । ५७ ॥

निर्दुःसुविपूर्वस्य स. ष ॥ सुषुपतु । अन श्वसक् प्राणने । २८ ॥

द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा ॥ २ । ३ । ८१ ॥

अदुरुपसर्गान्तःस्थाद्रादेः परस्य नो ण ॥ प्राणिति । हे प्राण् । परेस्तु पर्यणिनि । पर्यनिति । श्वसिति । अश्वासीत् । अश्वसीत् । जक्षक् भक्षहसनयो ।२९॥ जक्षिति । जाक्षितः । जक्षति । अजक्षत् । अजक्षीत् । अजक्षिताम् ॥

इयुक्तजक्षपञ्चत. ॥ ४ । २ । ९३ ॥

शितोऽवितोऽनः पुस् ॥ अजक्षु । अजक्षीत् । जजक्ष । दरिद्राक् दुर्गतौ । ३० ॥ दरिद्राति ।

इर्दरिद्र॰ ॥ ४ । २ । ९८ ॥

व्यञ्जनादौ शित्यवित्यातः ॥ दरिद्रित ॥

श्नश्चात ॥ ४ । २ । ९६ ॥

इयुक्तजक्षपञ्चत. शित्यविति लुक् ॥ दरिद्रति । दरिद्रियात् । अदरिद्रुः॥

दरिद्रोऽद्यतन्यां वा ॥ ४ । ३ । ७६ ॥

लुक् ॥ अदरिद्रीत् । अदरिद्रिषाम् । पक्षे, अदरिद्रासीत् ।

दरिद्राञ्चकार ॥

## अशित्यस्सन्णकजणकानटि ॥ ४ । ३ । ७७ ॥

दरिद्रो लुक् ॥ ददरिद्रौ । आतो णव औरित्यत्र ओ इत्येव सिद्धे औकारविधानसामर्थ्यादत्राम्विकल्प । विषयसप्तमीविज्ञानात् पूर्वमेवाकारलोपे दरिद्रातीति दरिद्र । अतेव भयाति नत्याकारान्तलक्षणो ण । अक इत्येव सिद्धे णञ्जणकयोरुपादानं किम् ? आशिष्यकनि माभूत्। दरिद्रक । ददरिद्रत्'। दरिद्रियात्। दरिद्रिता । जागृङ् निद्राक्षये । ३१ ॥ जागर्ति । जागृयात् । जागर्तु । नामिनो गुण इति गुणे ॥

## व्यञ्जनाद्दे सश्च द. ॥ ४ । ३ । ७८ ॥

धातोः परस्य लुक् यथासम्भव धातो ॥ अजाग । नानिष्टार्थेति न्यायेन सन्निपातन्यायोऽत्र न प्रवृत्तस्तेन गुणे कृते देर्लुक्सिद्ध' । अजागृताम् ॥

## पुस्पौ ॥ ४ । ३ । ३ ॥

नाम्यन्तस्य धातोर्गुण ॥ अजागरु' ॥

## से. सृद्धाञ्च रुर्वा ॥ ४ । ३ । ७९ ॥

व्यञ्जनान्ताद्धातोः परस्य लुक् ॥ अजाग' । न श्वीति वृद्धिनिषेधे, अजागरीत् । जागराञ्चकार । पक्षे ॥

## जागुर्ञिणवि ॥ ४ । ३ । ५२ ॥

एवं ञिणाति वृद्धि ॥ जजागार ॥

जागुः क्डिति ॥ ४ । ३ । ६ ॥

गुणः॥ अजागरत् । जागर्यात् । जागरिता। चकासृक् दीप्तौ। ३२ ॥ चकाधि । चकाद्धि । चकाधीत्येवेत्यन्ये । शासूक् अनुशिष्टौ । ३३ ॥

इसास. शासोऽङ्व्यञ्जने ॥ ४ । ४ । ११८ ॥

क्ङिति ॥ शिष्टः । शासति । शिष्यात् । शास्तु । शिष्टात् ॥

शासऽस्हन· शाध्येधिजहि ॥ ४ । २ । ८४ ॥

सन्तस्य ॥ शाधि । अशात् । अशिष्टाम् । अशासुः । अशा । अशात् । अशिषत् । शशास । शिष्यात् । शासिता । वचक् भाषणे । ३४ ॥ वक्ति । वक्तः । वचन्ति । अयमन्तिपरो न प्रयुज्यते इत्यन्ये । वक्तु । वक्तात् । वग्धि । वक्तात् । अवक् । अवोचत् । उवाच । ऊचतुः । उवचिथ । उवक्थ । उच्यात् । वक्ता । मृजौक् शुद्धौ । ३५ ॥

मृजोऽस्य वृद्धि· ॥ ४ । ३ । ४२ ॥

गुणे सति ॥ मार्ष्टि । मृष्ट· ॥

ऋत· स्वरे वा ॥ ४ । ३ । ४३ ॥

मृजेः प्रत्यये वृद्धिः ॥ मार्जन्ति । मृजन्ति । मार्क्षि। मृज्यात् । मार्ष्टु । मृष्टात् । मार्जन्तु । मृजन्तु । मृड्ढि । मृष्टात् । अमार्ड्-ट् । अमार्जन् । अमृजन् । अमार्ड्-ट् । अमार्जीत् । अमार्क्षीत् । ममार्ज । ममार्जतुः । ममृजतुः । मार्जिता । मार्ष्टा । सस्तृक् स्वप्ने । ३६ ॥

सस्ति । असस्तीत् । विदक् ज्ञाने ।३७॥ वेत्ति। वित्तः॥

तिवां णवः परस्मै ॥ ४ । २ । ११७॥

वेत्तेर्वा ॥ वेद । विदतु• । वेत्थ ॥

पञ्चम्या कृग् ॥ ३ । ४ । ५२ ॥

वेत्तेः परस्याः पञ्चम्या' किदाम् वा स्यात् आमन्ताच्च पञ्चम्यन्त•कृगनुप्रयुज्यते ॥ विदांकरोतु। वेत्तु। अवेत्-द्। अविताम्। अविदु । अवे । अवेत्-द् । अवेदीत् ॥

वेत्ते कित् ॥ ३ । ४ । ५१ ॥

परोक्षाया आम्वा कृभ्वस्ति चानु तदन्तम् ॥ विदाञ्चकार । विवेद । वेदिता । हनक् हिंसागत्यो । ३८ ॥ हन्ति । प्रणिहन्ति ॥

यमिरमिनमिगमिहनिमनिवनतितनादेर्धुटि क्ङिति ॥ ४ । २ । ५५ ॥

लुक् ॥ हत । घ्नन्ति । हसि । हन्मि ॥

वमि वा ॥ २ । ३ । ८३ ॥

अदुरुपसर्गान्तःस्थाद्धादे परस्य हन्तेर्नो ण' ॥ प्रहण्मि । प्रहन्मि। हन्यात् ॥

हन ॥ २ । ३ । ८२ ॥

अदुरुपसर्गान्त स्थाद्धादे परस्य नो ण ॥ प्रहण्यात् । हन्तु । हतात् । जहि । अहन् । अघ्नन् ।

अद्यतन्यां वा त्वात्मने ॥ ४ । ४ । २२ ॥

विषये हनो वध ॥ इट ईतीति सिज्लोपे । अवधीत् । अल्लुक स्थानित्वाश्च वृद्धिः ॥

## ञिणवि घन् ॥ ४ । ३ । १०१ ॥

हन्तेः ॥ घातोऽपवादः । जघान ॥

## अङे हिहनो हो घः पूर्वात् ॥ ४ । १ । ३४ ॥

द्वित्वे सति ॥ जघ्नतुः । जघनिथ । जघन्थ ॥

## हनो वध आशिष्यञौ ॥ ४ । ४ । २१ ॥

विषये ॥ वध्यात् । हन्ता । हनिष्यति । वशक् कान्तौ ।३९॥ वष्टि ॥

## वशेरयङि ॥ ४ । १ । ८३ ॥

सस्वरान्तःस्थाः क्ङिति य्वृत् ॥ उष्टः । असक् भुवि । ४० ॥

## श्नास्त्योर्लुक् ॥ ४ । २ । ९० ॥

अतः शित्यविति ॥ स्तः । सन्ति ॥

## अस्ते सि हस्त्वेति ॥ ४ । ३ । ७३ ॥

सःप्रत्यये लुक् ॥ असि । स्थः । स्यात् ॥

## प्रादुरुपसर्गाद्यस्वरेऽस्ते ॥ २ । ३ । ५८ ॥

नाम्यादेः सः षः प्रत्यये ॥ प्रादुःष्यात् । प्रादुःषन्ति । प्रापि । आसीत् । आस्ताम् ॥

## अस्तिब्रुवोर्भूवचावशिति ॥ ४ । ४ । १ ॥

अभूत् ॥ बभूव । षसक् स्वप्ने । ४१ ॥ सस्ति । सस्त । यङ्लुप् च । ४२ ॥ यङ्लुबन्ता अपि धातवोऽदादौ बोध्याः ॥

## ॥ इति परस्मैपदिन. ॥

---

## ॥ अथात्मनेपदिन. ॥

---

इङ्क् अध्ययने । १ ॥ नित्यमधिपूर्वोऽयम् । अधीते । अधीयाते । अधीयीत । अधीयीयाताम् । अधीताम् । अधीयाताम् । अध्ययै । अध्ययावहै । अध्यैत । अध्यैयाताम । अध्यैयत । अध्यैयि । अध्यैवहि ॥

**वाऽद्यतनीक्रियातिपत्त्योर्गीङ् ॥ ४ । ४ । २८ ॥**

इङ ॥ अध्यगीष्ट । अध्यैष्ट ॥

**गा परोक्षायाम् ॥ ४ । ४ । २६ ॥**

विषये इङ ॥ अधिजगे । अध्येषीष्ट । अध्येता । अध्येष्यते । अध्यगीष्यत । अध्यैष्यत । शीङ्क् स्वप्ने । २ ॥

**शीङ ए. शिति ॥ ४ । ३ । १०४ ॥**

शेते ॥ शयाते ॥

**शीङो रत् ॥ ४ । २ । ११५ ॥**

आत्मनेपदस्यस्यान्त' ॥ शेरते । अशयिष्ट । ह्नुङ्क् अपनयने । ३ ॥ ह्नुते । षूङौक् प्राणिगर्भविमोचने । ४ ॥ सूते ॥

## सूतेः पञ्चम्याम् ॥ ४ । ३ । १३ ॥

गुणो न ॥ सुवै। असाविष्ट। असोष्ट। औदित्वादिड् विकल्पबाधित्वा ॥

## उवर्णात् ॥ ४ । ४ । ५८ ॥

एकस्वराद्धातोर्विहितस्य कित आदिरिण्न ॥ इति निषेधे प्राप्ते परत्वात् स्क्रसवृभृ इति नित्यमिट्, सुषुविषे। सुषुविढ्वे। सुषुविध्वे। पृचैङ् पृजुङ् पिजुकि सम्पर्चने । ५ ॥ वृजैकि वर्जने । ६ ॥ णिजुकि विशुद्धौ । ७ ॥ शिजुकि अव्यक्ते शब्दे । ८ ॥ ईडिक् स्तुतौ ।९॥

## ईशीड सेध्वेस्वध्यमो ॥ ४ । ४ । ८७ ॥

आदिरिट् ॥ ईडिषे । ईडिध्वे । ईडिष्व । ईडिध्वम् । स्वसाहचर्यात् पञ्चमीध्वम एव ग्रहणम् । तेन ह्यस्तन्याम् ऐड्ढ्वम् ॥ ईरिक् गतिकम्पनयोः । १० ॥ ईर्ते । ईराचक्रे । ईशिक् ऐश्वर्ये । ११ ॥ ईष्टे । ईशिषे । ईशिध्वे । ईशिष्व । ईशिध्वम् ॥ वसिक् आच्छादने। १२ ॥ वस्ते । वध्वे । आङ शासूकि इच्छायाम् । १३ ॥

## आङः ॥ ४ । ४ । १२० ॥

शास् आस् ययोरेव इस् ॥ ऊदित्त्वं नियमार्थत्वादिह न । आशास्ते । आसिक् उपवेशने । १४ ॥ आस्ते । आसिष्ट । आसांचक्रे । कसुकि गतिशातनयोः । १५ ॥ कस्ते । अयमनुदिदपि । कस्ते । तालव्यान्तोऽपि । कष्टे । कक्षे । कड्ढ्वे । णिसुकि चुम्बने । १६ ॥ निंस्ते । चक्षिक् व्यक्तायां वाचि । १७ ॥ दर्शनेऽप्यन्ये । आचष्टे । आचक्षे । आचड्ढ्वे ।

चक्षो वाचि क्शांग् ख्यांग् ॥ ४ । ४ । ४ ॥

अशिति विषये ॥ अक्शासीत् । अख्यासीत् । अक्शास्त । अख्यास्त । आक्शात् । आख्यात् । विषयसप्तमीविज्ञानात् आक्शेयम् । आख्येयम् । वाचीति किम् ? । बोधे विचक्षण ।

नवा परोक्षायाम् ॥ ४ । ४ । ५ ॥

आचक्शौ ॥ आचख्यौ । आचख्यौ । आचक्शे । आचख्ये । आचख्ये । आचचक्षे । आक्शायात् । आक्शेयात् । आख्यायात् । आख्येयात् । आख्येयात् । आख्यायात् । आक्शासीष्ट । २ ॥

॥ इत्यात्मनेपदिन. ॥

---

ऊर्णुग्क् आच्छादने । १ ॥

वोर्णोः ॥ ४ । ३ । ६० ॥

अद्व्युक्तस्य व्यञ्जनादौ ञित्यौः ॥ ऊर्णौति । ऊर्णोति । ऊर्णुतः । ऊर्णौतु । ऊर्णोतु ।

न दिस्योः ॥ ४ । ३ । ६१ ॥ *

ऊर्णोतेरौः ॥ और्णोत् । और्णोः ।

वोर्णुगः सेटि ॥ ४ । ३ । ४६ ॥

सिचि परस्मैपदे वृद्धिः ॥

वोर्णोः ॥ ४ । ३ । १९ ॥

इट् ङिद्वत् ॥ और्णवीत् । और्णावीत् । और्णुवीत् ।

स्वरादेर्द्वितीय ॥ ४।१।४॥

युक्तिभाज एकस्वरो द्विः॥ प्राक् तु स्वरे स्वरविधेरित्येव। आटिटत्॥

अयि र. ॥ ४ । १ । ६ ॥

स्वरादेर्धातोर्द्वितीयस्यांशस्यैकस्वरस्य संयोगादिर्द्विर्न स्यात् ॥ णत्वस्यासिद्धत्वान्नुशब्दस्य द्वित्वम्। ऊर्णुनाव। ऊर्णुनुवतु'। ऊर्णुनुविथ। ऊर्णुनविथ। ऊर्णुयात्। ऊर्णुविता। ऊर्णविता। ऊर्णुते। और्णुविष्ट। और्णविष्ट। ष्टुगक् स्तुतौ। २॥ स्तौति।

उपसर्गात् सुग्सुवसोस्तुस्तुभोऽट्यप्यद्वित्वे ॥ २।३।३९॥

नाम्यादेः स' ष् स्यात् ॥ अभिष्टौति। स्तवीति। स्तुते। स्तुवाते। अस्तौत्। अस्तवीत्। पर्यष्टौत्। पर्यस्तौत्। अस्तुत।

धूगसुस्तोः परस्मै ॥ ४।४।८५॥

सिच आदिरिट् ॥ सु इति सुमात्रस्य ग्रहणम्। अस्तावीत्। अस्तोष्ट। तुष्टाव। तुष्टोथ। तुष्टुवे। ब्रूगक् व्यक्तायां वाचि।३॥

ब्रूग. पञ्चानां पञ्चाहश्च ॥ ४। २। ११८॥

तिवादीनां यथासङ्ख्य णवादयो वा स्युस्तद्योगे ब्रूग ॥ आह। आहतु'। आहु। नहाहोर्धतावित्ति हस्य ते। आत्थ। आहथु.। पक्षे॥

ब्रूत. परादि. ॥ ४।३।६३॥

व्यञ्जनादौ विति ईत् ॥ ब्रवीति। ब्रूत.। ब्रुवन्ति। अस्ति-ब्रुवोरिति वचि। अवोचत्। अवोचत। उवाच। ऊचे। द्विषीक्

अमीतौ ।४॥ द्वेष्टि ।द्विष्टे । अद्वेट् । अद्वेड् । अद्विषुः। अद्विषन्। अद्विक्षत् । अद्विक्षत । दुहींक् क्षरणे । ५ ॥ दोग्धि । दुग्धे । धोक्षि। धुक्षे । अधोक् । अधोग् । अदुग्ध । अधुक्षत् । दुहदिहलिहगुह इति सको लुकि । अदुग्ध । पक्षे । अधुक्षत । दुदोह । दुदुहे । दोग्धा । दिहींक् लेपे । ६ ॥ देग्धि । दिग्धे । लिहींक् आस्वादने । ७ ॥ लेढि। लीढे। लीढ । लीढि। अलेट्। अलेड्। अलीढ। अलिक्षत् । अलीढ । अलिक्षत ।

॥ इति उभयपदिन ॥

॥ अथादाद्यन्तर्गणो ह्वादि ॥

हुक् दानादनयो ।१ ॥ दानमिह हविष्प्रक्षेप ॥

हुव. शिति ॥ ४ । १ । १२ ॥

द्वि ॥ जुहोति । जुहुत । अन्तो नो लुक् । हिणोरप्विति व्यौ । जुह्वति । जुहुधि । जुहवानि । अजुहोत् । अजुहवु' । अहौषीत्॥

भीह्रीभृहोस्तिव्वत् ॥ ३ । ४ । ५० ॥

परोक्षाया आम् वा आमन्ताच परे कृभ्वस्तय' परोक्षान्ता अनुप्रयुज्यन्ते ॥ जुहवाञ्चकार । जुहाव । जुहविथ । जुहोथ । जुहुवे । ओहाक् त्यागे । २ ॥ जहाति ॥

हाक ॥ ४ । २ । १००॥

व्यञ्जनादौ क्ङित्यविति आत इर्वा ॥ जहित. । पक्षे ॥

## एषामीर्व्यञ्जनेऽदः ॥ ४ । २ । ९७ ॥

द्व्युक्तजक्षपञ्चतः श्नश्चात. शित्यविति व्यञ्जनादावी. स्यात् न तु दासञ्ज्ञकस्य । जहीत । श्नश्चात इत्यालुकि । जहाति ॥

## यि लुक् ॥ ४ । २ । १०२ ॥

शिति हाकोन्तस्य ॥ जह्यात् ॥

## आ च हौ ॥ ४ । २ । १०१ ॥

हाक इर्वा ॥ जहाहि । जहिहि । जहीहि । जहिता । जहीता । अजहात् । अहासीत् । जहौ । हेयात् । ञिभीक् भये ।३॥ बिभेति ।

## भियो नवा ॥ ४ । २ । ९९ ॥

व्यञ्जनादौ शित्यवति इः ॥ बिभितः । बिभीतः । बिभ्यति । बिभीयात् । बिभियात् । अभैषीत् । भीहीत्यामि । बिभयाञ्चकार । बिभाय । ह्रींक् लज्जायाम् । ४ ॥ जिह्रेति । जिह्रीत । जिह्रियति । अह्रैषीत् । जिह्रयाञ्चकार । जिह्राय । पृक् पालनपूरणयो । ५ ॥

## पॄभृमाहाङामि ॥ ४ । १ । ५८ ॥

शिति द्वित्वे पूर्वस्य ॥ पिपर्त्ति । पिपृत । पिप्रति । केचित्तु दीर्घान्तमिमं पठन्ति । तन्मतसङ्ग्रहार्थन्तु पृश्च ऋश्चेति विग्रह । अत एव च बहुवचनम् । अत्र पक्ष ।

## ओष्ठ्यादुर् ॥ ४ । ४ । ११७ ॥

धातो परस्य ऋत. क्ङिति ॥ भ्वादेर्नामिन इति दीर्घे । पिपूर्त । पिपुरति । पिपूर्यात् । पिपर्तु । पिपृतात् । अपार्षीत् । मतान्तरे ।

पिपूर्यात् । पिपर्तु । पिपूर्तात् । अपारीत् ।

ऋ शदृप्र. ॥ ४ । ४ । २० ॥

परोक्षायां वा ॥ पप्रतुः । पक्षे स्क्रृच्छ्रृत इति गुणे पपरतुः । प्रियात् । पक्षे पूर्यात् । पर्ता । पक्षे, परिता । परीता । परिष्यति । पक्षे, परिष्यति । परीष्यति । ऋक् गतौ ।६॥ द्वित्वे पूर्वस्येत्वे द्वितीयस्य गुणे पूर्वस्येयादेशे । इयर्ति । इयृत । इयति । इयृयात् । इयर्तु । इयृतात् । इयृहि । इयराणि । ऐय । ऐयृताम् । ऐयरुः । सर्त्यर्त्तेर्वेत्यङ् । आरत् । आर्यात् । आर । आरतु । ऋवृव्येद इतीट् । आरिथ । अर्यात् । अर्त्ता । अरिष्यति ।

॥ इति परस्मैपदिनः ॥

---

ओहांङ्क् गतौ । १ ॥ जिहीते । जिहाते । जिहते । जिहीत । जिहीताम् । अजिहीत । अहास्त । जहे । हासीष्ट । माङ्क् मानशब्दयोः ।२॥ मिमीते । इत्यात्मनेपदिनौ । डुदांक् दाने ।१॥ ददाति । प्रणिददाति । न्त. । ददति । दत्ते ।

हौ दः ॥ ४ । १ । ३१ ॥

दासञ्ज्ञकस्य हावेनं च द्विः ॥ देहि । हाविति व्यक्तिनिर्देशाद्दिहि न । दद्यात् । अदद्यात् । अदत्ताम् । अदत्त । अदात् । अदित । ददौ । ददे । देयात् । दासीष्ट । डुधांग्क् धारणे च । ७ ॥ प्रणिदधाति ।

धागस्तथोश्च ॥ २ । १ । ७८ ॥

चतुर्थान्तस्य दादेरादेर्दस्य सध्वो प्रत्यययोश्चतुर्थः॥धत्त। अत्रास-द्विधित्वाद्वचनसामर्थ्याद्वाऽऽत्वोलोपस्य न स्थानिवद्भावः। अनुबन्धनिर्देश किम्। "तिवा शवानुबन्धेन निर्दिष्टं यद्गणेन च एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुपि॥१॥" इति न्यायात् यङ्लुबन्तस्य माभूत्। केचित्तु यङ्लुबन्तस्यापीच्छन्ति। चतुर्थान्तस्येत्येव। दधाति। दधति। धेहि। अदधात्। अधत्ताम्। धत्ते। अधात्। अधित। डुभृग्क् पोषणे च।३॥ बिभर्त्ति। बिभृते। अबिभ। अबिभृताम्। अबिभरुः। अबिभृत। अभार्षीत्। अभृत। बिभराञ्चकार। बभार। बभर्थ। बभृव। बिभराञ्चक्रे। बभ्रे। भ्रियात्। भृषीष्ट। णिजृकी शौचे च।४॥

## निजां शित्येत्॥ ४। १। ५७॥

निजिविजिविषां शिति द्वित्वे पूर्वस्यैत्॥ नेनेक्ति। नेनिक्ते।

## लघुक्तोपान्त्यस्य शिति स्वरे॥ ४। ३। १४॥

नामिनो गुणो न॥ नेनिजानि। नेनिजे। अनेनेक्-ग्। अनेनिक्त। अनिजत्। अनैक्षीत्। अनिक्त। अनिक्षाताम्। विजृकी पृथग्भावे।५॥ वेवेक्ति। वेविक्ते। विष्लृकी व्याप्तौ।६॥ वेवेष्टि। वेविष्टे। अवेवेट्-ड्। अवेविष्ट। अविषत्। अविक्षत।

॥ इत्युभयपदिनः॥

हृत् हादयः॥ अन्येऽपि धातवोऽपि सन्ति॥ घृक् क्षरणदीप्त्योः। ह्वृक् प्रसह्यकरणे। सृक् गतौ। ससर्त्ति। भसक् भर्त्सनदीप्त्योः। बभस्ति। किक् कितक् ज्ञाने। चिकेति। चिकेत्ति। तुरक् त्वरणे।

तुतोर्चि । धिषक् शब्दे । दिधेष्टि । धनक् धान्ये । दधन्ति । जनक् जनने । जजन्ति । गांक् स्तुतौ । जिगाति । जिगातः । जिगति ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहैमप्रभायामुत्तरार्द्धेऽदादयः ॥

## ॥ अथ दिवादयः ॥

दिवूच् क्रीडाजयेच्छापणिद्युतिस्तुतिगतिषु ।१॥

### दिवादेः श्यः ॥ ३ । ४ । ७२ ॥

कर्त्तरि विहिते शिति ॥ भ्वादेरितिदीर्घे । दीव्यति । दीव्येत् । अदेवीत् । जॄष् झॄष् जरसि ।२॥ ऋतां क्ङितीर् । जीर्यति । अजरत् । अजारीत् । जजार । स्कृच्छत इति गुणे । जॄभ्रमेत्येत्वे । जेरतुः । जजरतुः । जीर्यात् । जरीता । जरिता । शोंच् तक्षणे । ३ ॥

### ओतः श्ये ॥ ४ । २ । १०३ ॥

धातोर्लुक् ॥ श्यति । अशात् । अशासीत् । शाता । दोंच् छोंच् छेदने ।४॥ षोंच् अन्तकर्मणि ।५॥ स्यति । व्रीडच् लज्जायाम् ।६॥ नृतैच् नर्तने ।७॥

### कृतचृतनृतछृदतृदोऽसिचः सादेर्वा ॥ ४ । ४ । ५० ॥

स्तायशित आदिरिट् ॥ नर्तिष्यति । नर्त्स्यति । कुथच् पूति-

भावे । ८ ॥ पुथच् हिंसायाम् । ९ ॥ गुधच् परिवेष्टने ।१०॥ राधंच् वृद्धौ ।११॥ वृद्धेरन्यत्र राध्नोति । व्यधच् ताडने ॥ १२ ॥

## ज्याव्यध क्ङिति ॥ ४ । १ । ८१ ॥

सस्वरान्तस्था य्वृत् ॥ विध्यति । अव्यात्सीत् । विव्याध । विविधतुः ॥ क्षिपच् प्रेरणे ।१३॥ पुष्पच् विकसने ।१४॥ तिम तीम ष्टिम ष्टीमच् आर्द्रभावे ।१५॥ षिवूच् ऊतौ ।१६॥ परिषीव्यति । पर्यषीव्यत् । परिषिषेव । श्रिवूच् गतिशोषणयोः । १७ ॥ ष्ठिवु क्षिवूच् निरसने ।१८॥ तिष्ठेव । टिष्ठेव । इषच् गतौ । १९ ॥ इयेष । एषिता । इच्छेति-निर्देशान्नेह सहलुभेच्छेतीड्विकल्पः । ऊदिदयमित्यन्ये । इष्ट्वा । एषित्वा । इष्ट. । इष्टवान् । ष्णसूच् निरसने ।२०॥ क्नसूच् ह्वृतिदीप्त्योः ।२१॥ त्रसैच् भये ।२२॥ भ्रासम्लासेति वा श्ये । त्रस्यति । त्रसति । जृभ्रमेति वेत्वे । त्रेसतुः । तत्रसतुः । व्युसच् दाहे । २३ ॥ पान्तोऽयमित्यन्ये । अव्योसीत् । षह षुहच् शक्तौ । २४ ॥ ससाह । सेहतुः । पुषच् पुष्टौ ।२५ ॥ लृदिदित्यङि । अपुषत् । उचच् समवाये । २६ ॥ औचत् । लुटच् विलोटने । २७ ॥ ष्विदांच् गात्रप्रक्षरणे । २८ ॥ क्लिदौच् आर्द्रभावे ।२९॥ ञिष्विदाच् स्नेहने ।३०॥

## मिद श्ये ॥ ४ । ३ । ५ ॥

उपान्त्यस्य गुणः ॥ मेद्यति । ञिक्ष्विदाच् मोचने च । ३१ ॥ क्षुधंच् बुभुक्षायाम् । ३२ ॥ शुधच् शौचे ।३३॥ क्रुधच् कोपे ।३४॥ षिधूच् सराद्धौ । ३५ ॥ असिधत् । ऋधूच् वृद्धौ । ३६ ॥ आर्धत् । गृधूच् अभिकाङ्क्षायाम् । ३७ ॥ अगृधत् । रधौच् हिंसासंराद्ध्योः । ३८ ॥

रध इटि तु परोक्षायामेव ॥ ४ । ४ । १०१ ॥

स्वरात्परः स्वरादौ प्रत्यये नोऽन्त ॥ ररन्ध ररन्धतुः। ररन्धिथ। ररन्धिव । रधिता । रद्धा । तृपौच् प्रीतौ । ३९ ॥ तृप्यति । अत्राप्सीत् । अताप्सीत् । अतर्पीत् । अतृपत् । दृपौच् हर्षमोहनयो ।४०॥ कुपच् क्रोधे । ४१ ॥ गुपच् व्याकुलत्वे । ४२ ॥ युप रुप लुपच् विमोहने । ४३ ॥ डिपच् क्षेपे । ४४ ॥ ष्टुपच् समुच्छ्राये । ४५ ॥ लुभच् गार्द्ध्ये । ४६ ॥ लोभिता । लोब्धा। क्षुभच् सञ्चलने।४७॥ णभ तुभच् हिंसायाम् । ४८॥ नशौच् अदर्शने । ४९ ॥ नश्यति ।

नशः शः ॥ २ । ३ । ७८ ॥

अदुरुपसर्गान्त स्थाद्रादे परस्य नो णः ॥ प्रणश्यति । श इति किम् ? प्रनष्ट । नशेरणोपदेशत्वात् पूर्वेणासिद्धेर्विध्यर्थमिदम् ।

नशेर्नेश् वाऽङि ॥ ४ । ३ । १०२ ॥

अनेशत् । अनशत् ।

नशो धुटि ॥ ४ । ४ । १०९ ॥

स्वरात्पर. प्रत्यये नोऽन्त ॥ नष्टा । नशिता । नङ्क्ष्यति । नशिष्यति । कुशच् श्लेषणे । ५० ॥ भृशू भ्रंशूच् अधःपतने । ५१॥ वृशच् वरणे । ५२ ॥ कृशच् तनुत्वे । ५३ ॥ शुषच् शोषणे।५४॥ दुषच् वैकृत्ये । ५५ ॥ श्लिषच् आलिङ्गने । ५६ ॥

श्लिषः ॥ ३ । ४ । ५६ ॥

अनिटोऽद्यतन्या सक् ॥ अश्लिक्षत्। पुष्यादित्वादङि प्राप्ते वचनम् । पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान् इत्यङ एव बाधा न जिच । आश्लेषि कन्या देवदत्तेन । अनिट इत्येव ।

श्लिषु दाहे इत्यस्य अश्लेषीत् । अधाक्षीदित्यर्थः ।

नासत्त्वाश्लेषे ॥ ३ । ४ । ५७ ॥

वर्त्तमानात् श्लिषः सक् ॥ समश्लिषद् गुरुकुलम् । उपाश्लिषज्जतु च काष्ठं च । पृथग्योगात् पूर्वेणापि मास्म प्रतिषिध्यते । व्यत्यश्लिक्षत काष्ठानि । असत्त्वाश्लेषे इति किम् ? व्यत्यश्लिक्षन्त मिथुनानि । प्लुषूच् दाहे । ५७ ॥ अनुदित्वमित्येके । त्रितृषच् पिपासायाम् । ५८ ॥ तुष हृषच् तुष्टौ । ५९ ॥ रुषच् रोषे । ६० ॥ प्युष् प्युस् पुसच् विभागे । ६१ ॥ बिसच् प्रेरणे । ६२ ॥ कुसच् श्लेषे । ६३ ॥ असूच् क्षेपणे । ६४ ॥ अस्यति । आस्थत् । यसूच् प्रयत्ने । ६५ ॥ यस्यति । यसति । संयस्यति । संयसति । जसूच् मोक्षणे । ६६ ॥ हिंसार्थोऽप्ययमित्येके । तसू दसूच् उपक्षये ।६७॥ वसूच् स्तम्भे । ६८ ॥ वुसच् उत्सर्गे ।६९॥ मुसच् खण्डने।७०॥ मसैच् परिणामे । ७१ ॥ शमू दमूच् उपशमे । ७२ ॥

शमसप्तकस्य श्ये ॥ ४ । २ । १११ ॥

दीर्घः ॥ शाम्यति । प्रणिशाम्यति । अशमत् । तमूच् काङ्क्षायाम् । ७३ ॥ श्रमूच् खेदतपसोः । ७४ ॥ भ्रमूच् अनवस्थाने।७५॥ भ्राम्यति। भ्रमति। भ्रेमतु । बभ्रमतुः। क्षमौच् सहने।७६॥ क्षाम्यति। क्षमिता। क्षन्ता । मदैच् हर्षे ।७७॥ क्लमूच् ग्लानौ । ७८ ॥ क्लाम्यति। क्लामति । अक्लमत् । मुहौच् वैचित्ये । ७९ ॥ मोहिता । मोग्धा । मोढा । द्रुहौच् जिघांसायाम् । ८० ॥ द्रोहिता । द्रोग्धा । द्रोढा । ष्णुहौच् उद्गिरणे । ८१ ॥ ष्णिहौच् प्रीतौ। ८२ ॥ वृत् पुषादिः॥

॥ इति परस्मैपदिनः ॥

## रध इटि तु परोक्षायामेव ॥ ४ । ४ । १०१ ॥

स्वरात्परः स्वरादौ प्रत्यये नोऽन्त ॥ ररन्ध ररन्धतुः। ररन्धिथ। ररन्धिव । रधिता । रद्धा । तृपौच् प्रीतौ । ३९ ॥ तृप्यति । अत्राप्सीत् । आताप्सीत् । अतर्पीत् । अतृपत् । दृपौच् हर्षमोहनयो ।४०॥ कुपच् क्रोधे । ४१ ॥ गुपच् व्याकुलत्वे । ४२ ॥ युप रुप लुपच् विमोहने । ४३ ॥ डिपच् क्षेपे । ४४ ॥ ष्टुपच् समुच्छ्राये । ४५ ॥ लुभच् गार्ध्ये । ४६ ॥ लोभिता । लोब्धा। क्षुभच् सञ्चलने।४७॥ णभ तुभच् हिंसायाम् । ४८॥ नशौच् अदर्शने । ४९ ॥ नश्यति ।

## नशः शः ॥ २ । ३ । ७८ ॥

अदुरुपसर्गान्त स्थाच्छादेः परस्य नो णः ॥ प्रणश्यति । श इति किम् ? प्रनष्टः । नशेरणोपदेशत्वात् पूर्वेणासिद्धेर्विध्यर्थमिदम् ।

## नशोर्नेश् वाऽङि ॥ ४ । ३ । १०२ ॥

अनेशत् । अनशत् ।

## नशो धुटि ॥ ४ । ४ । १०९ ॥

स्वरात्परः प्रत्यये नोऽन्तः ॥ नंष्टा । नशिता । नङ्क्ष्यति । नशिष्यति । कुशच् श्लेषणे । ५० ॥ भृशू भ्रंशूच् अधःपतने । ५१॥ वृशच् वरणे । ५२ ॥ कृशच् तनुत्वे । ५३ ॥ शुषच् शोषणे।५४॥ दुषच् वैकृत्ये । ५५ ॥ श्लिषच् आलिङ्गने । ५६ ॥

## श्लिषः ॥ ३ । ४ । ५६ ॥

अनिटोऽद्यतन्यां सक् ॥ अश्लिक्षत्। पुष्यादित्वादङि प्राप्ते वचनम् । पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान् इत्यस्य एष बाधा न ञिच । आश्लिषि कन्या देवदत्तेन । अनिट इत्येव ।

श्लिषू दाहे इत्यस्य अश्लेषीत् । अधाक्षीदित्यर्थः ।

## नासत्वाश्लेषे ॥ ३ । ४ । ५७ ॥

वर्त्तमानात् श्लिषः सक् ॥ समाश्लिषद् गुरुकुलम् । उपाश्लिषज्जतु च काष्ठं च । पृथग्योगात् पूर्वेणापि माम प्रतिषिध्यते । व्यत्यश्लिक्षत काष्ठानि । असत्वाश्लेषे इति किम् ? व्यत्यश्लिक्षन्त मिथुनानि । प्लुषूच् दाहे । ५७ ॥ अनुदिदयमित्येके । ञितृपच् पिपासायाम् । ५८ ॥ तुष हृषच् तुष्टौ । ५९ ॥ रुषच् रोषे । ६० ॥ प्युष् प्युस् पुसच् विभागे । ६१ ॥ विसच् प्रेरणे । ६२ ॥ कुसच् श्लेषे । ६३ ॥ असूच् क्षेपणे । ६४ ॥ अस्यति । आस्थत् । यसूच् प्रयत्ने । ६५ ॥ यस्यति । यसति । सयस्यति । सयसति । जसूच् मोक्षणे । ६६ ॥ हिंसार्थोऽप्ययमित्येके । तसू दसूच् उपक्षये ।६७॥ वसूच् स्तम्भे । ६८ ॥ व्युसच् उत्सर्गे ।६९॥ मुसच् खण्डने।७०॥ मसैच् परिणामे । ७१ ॥ शमू दमूच् उपशमे । ७२ ॥

## शमूसप्तकस्य श्ये ॥ ४ । २ । १११ ॥

दीर्घः ॥ शाम्यति । प्रणिशाम्यति । अशमत् । तमूच् काङ्क्षायाम् । ७३ ॥ श्रमूच् खेदतपसोः । ७४ ॥ भ्रमूच् अनवस्थाने।७५॥ भ्राम्यति। भ्रामति। भ्रेमतु । बभ्रमतुः। क्षमौच् सहने।७६॥ क्षाम्यति। क्षमिता। क्षन्ता । मदैच् हर्षे।७७॥ क्लमूच् ग्लानौ । ७८ ॥ क्लाम्यति। क्लामति । अक्लमत् । मुहौच् वैचित्ये । ७९ ॥ मोहिता । मोग्धा । मोढा । द्रुहौच् जिघांसायाम् । ८० ॥ द्रोहिता । द्रोग्धा । द्रोढा । ष्णुहौच् उद्गिरणे । ८१ ॥ ष्णिहौच् प्रीतौ । ८२ ॥ वृत् पुषादिः॥

॥ इति परस्मैपदिनः ॥

पूङौच् प्राणिप्रसवे।१॥ सूयते। असविष्ट असोष्ट। सुषुविषे। सुषुविढ्वे। सविता। सोता। दूङ्च् परितापे। २॥ दीङ्च् क्षये। ३॥ दीयते॥

## यवक्किति ॥ ४। २। ७॥

विषये दीङ आत्॥ अदास्त॥

## दीय् दीङ क्किति स्वरे ॥ ४। ३। ९३॥

अशिति॥ दिदीये। दाता। धीङ्च् अनादरे। ४॥ धीयते। अधेष्ट। दिध्ये। मीङ्च् हिंसायाम्। ५॥ रीङ्च् श्रवणे ६॥ लीङ्च् श्लेषणे। ७॥

## लीङ्लिनोर्वा ॥ ४। २। ९॥

यपि खलचलवर्जितेऽक्किति च विषये आत्॥ अलास्त। अलेष्ट। लिल्ये। लेता। लाता॥ डीङ्च् गतौ। ८॥ विहायसा गतावित्यन्ये। व्रीङ्च् वरणे। ९॥ अव्रेष्ट। ह्रव् स्वादि। तत्फल तु क्योस्तस्य नत्वम्। पीङ्च् पाने। १०॥ ईङ्च् गतौ। ११॥ ईयते। अयाञ्चक्रे। प्रीङ्च् प्रीतौ। १२॥ युजिच् समाधौ।१३॥ अयुक्त। सृजिंच् विसर्गे। १४॥ असृष्ट। असृक्षाताम्। सृक्षीष्ट। स्रष्टा। वृतूचि वरणे। १५॥ अवर्तिष्ट। वावृतु इत्यन्ये। पदिच् गतौ। १६॥ प्रणिपद्यते।

## जिच् ते पदस्तलुक् च ॥ ३। ४। ६६॥

कर्तर्यनन्त्या॥ अपादि। अपत्साताम्। पेदे। पत्सीष्ट। विदिच् सत्तायाम्। १७॥ अवित्त। खिदिंच् दैन्ये। १८॥ युधिंच् सम्प्रहारे। १९॥ अयुद्ध। युत्सीष्ट। अनो रुधिंच् कामे। २०॥

बुधि मनिच् ज्ञाने । २१ ॥ अबोधि । अबुद्ध । अभुत्साताम् । अनिच् प्राणने । २२ ॥ जनैचि प्रादुर्भावे । २३ ॥

जा ज्ञाजनोऽत्यादौ ॥ ४ । २ । १०४ ॥

शित्यनन्तरे ॥ जायते । अत्यादाविति किम्? यङ्लुपि जजन्ति। दीपजनेति ञिचि ।

न जनवध. ॥ ४ । ३ । ५४ ॥

ञ्णौ कृति ञिणति च वृद्धिः ॥ अजनि । अजनिष्ट । वधिरत्र वधबन्धन इत्यत्र श्रूयते। यस्य बीभत्सत इति वैरूप्य एव सन्निर्दिश्यतेऽन्यत्र बधते इत्येव । भसकश्चेष्मास्ति वधकोऽपि न विद्यते। अन्ये त्वगणपठित वधिं हिंसार्थं मन्यन्ते, अत्युदाहरन्ति च ववाध । जज्ञे । जनिता । दीपैचि दीप्तौ । २४ ॥ अदीपि । अदीपिष्ट। तपिंच् ऐश्वर्ये वा । २५ ॥ तप धूप सन्ताप इत्यस्यै वैश्वर्ये दिवादित्वेमात्मनेपदित्व च वा विधीयते । तप्यते । अतप्त। पक्षे ऐश्वर्येऽपि भ्वादित्वं परस्मैपदित्व च । पुरैचि आप्यायने । २६ ॥ अपूरि अपूरिष्ट । घूरैङ् ज्वरैचि जरायाम् । २७ ॥ धूरैङ् गूरैचि गतौ । २८ ॥ शूरैचि स्तम्भे । २९ ॥ तूरैचि त्वरायाम् । ३० ॥ घूरादयो हिंसायां च । ३१ ॥ चूरैचि दाहे । ३२ ॥ क्लिशिच् उपतापे ।३३॥ अक्लेशिष्ट । लिशिच् अल्पत्वे । ३४ ॥ काशिच् दीप्तौ । ३५ ॥ वाशिच् शब्दे । ३६ ॥

॥ इत्यात्मनेपदिनः ॥

शकींच् मर्षणे । ३ ॥ अशाक्षीत् । अशक्त । शशाक ।

शुचृगैच् पूतिभावे। २ ॥ अशोचीत्। अशुचत्। अशोचिष्ट। रञ्जींच् रागे। ३ ॥ शपींच् आक्रोशे। ४ ॥ मृषींच् तितिक्षायाम् । ५॥ अमर्षीत् अमर्षिष्ट। णहींच् बन्धने। ६ ॥ नह्यति । नह्यते। अनात्सीत्। अनद्ध। ननाह। नेहे ॥ इत्युभयपदिन ॥ दिवादिर्वा-दिवदाकृतिगण, तेन क्षीयते मृग्यति इत्यादि।

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्परा-मितिष्ठितगीतार्थरत्नादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलामि-लिन्दायमानान्तेवासिसविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजय-नेमिसूरिविरचितायां लघुहेमप्रभायामुत्तरार्द्धे दिवादय ॥

## ॥ अथ स्वादि ॥

षुगृट् अभिषवे। १ ॥

स्वादे श्नु ॥ ३ । ४ । ७५ ॥

कर्त्तरि विहिते शिति ॥ उश्नोरिति गुणे । सुनोति । सुनुते ॥

वम्य्ऽविति वा ॥ ४ । २ । ८७ ॥

असयोगात् परो य उस्तस्य प्रत्ययसम्बन्धिनो लुक् ॥ सुन्वः । सुनुवः । सुन्म । सुनुम । सुनु । सुनुतात् । असावीत् । अभिषुणोति । अभ्यषुणोत् । अभिसुषाव ।

सुग स्यसनि ॥ २ । ३ । ६२ ॥

स' ष न ॥ अभिसोष्यति । षिंगृट् बन्धने । २ ॥ शिंगृट् निशातने । ३ ॥ डुमिंगृट् प्रक्षेपणे । ४ ॥

मिग्मीगोऽखलचलि ॥ ४ । २ । ८ ॥

यप्यक्ङिति च विषये आत् ॥ अमासीत् । अमास्त । ममौ । मिम्ये । चिंगुट् चयने । ५ ॥

चेः किर्वा ॥ ४ । १ । ३६ ॥

सन्परोक्षयोर्द्विस्त्वे सति पूर्वस्मात्परस्य ॥ चिकाय । चिचाय । चिक्ये । चिच्ये । धुगुट् कम्पने । ६ ॥ अधावीत् । अधविष्ट । अधोष्ट । उदन्तोऽनिट् चायमित्येके । स्तृगुट् आच्छादने । ७ ॥ अस्तार्षीत् ॥

संयोगादृत. ॥ ४ । ४ । ३७ ॥

धातोः परयोरात्मनेपदविषयसिजाशिषोरादिरिड्वा ॥ अस्तरिष्ट । अस्तृत । तस्तार । तस्तरे । स्तर्यात् । स्तरिषीष्ट । स्तृषीष्ट । कृगुट् हिंसायाम् । ८ ॥ अकार्षीत् । अकृत । वृगुट् वरणे ।९॥ अवारीत्॥

इट् सिजाशिषोरात्मने ॥ ४ । ४ । ३६ ॥

वृत आदिर्वा ॥ अवरीष्ट । अवरिष्ट । अवृत । ववरिथ ।

ऋवर्णश्र्यूर्णुगः कित. ॥ ४ । ४ । ५७ ॥

एकस्वराद्धातोर्विहितस्य कित आदिरिड्न । वव्रे । वरिषीष्ट । वृषीष्ट ।

॥ इत्युभयपदिन. ॥

---

हिंट् गतिवृद्ध्योः । १ ॥ महिणोति । जिघाय । श्रुंट् श्रवणे । २ ॥ गतावित्यन्ये । शृणोति । अश्रौषीत् । शुश्राव । शुश्रुवहे । शुश्रोथ । दुदुट् उपतापे । ३ ॥ पृट् प्रीतौ । ४ ॥ स्पृट् पालने च ।

५ ॥ स्पृट् इत्येके । शक्लृट् शक्तौ । ६ ॥ शक्नुवन्ति । शशाक । अशकत् । तिक तिग षघट् हिंसायाम् । ७ ॥ आधाघास्कन्दनेऽपीत्येके । सेघतुः । राध साधंट् संसिद्धौ । ८ ॥

अवित्परोक्षासेट्थवोरे. ॥ ४ । १ । २३ ॥

राधेर्हिंसार्थस्य स्वरस्य न च द्वि ॥ अपरेधतुः । यथ इत्येव । आरराधतुः । असात्सीत् । अषोपदेशोऽयम् । षोपदेशोऽयमित्येके ऋधूट् वृद्धौ । ९ ॥ आर्ध्नोत् । आनर्ध । आप्लृट् व्याप्तौ । १० । आपत् । तृपट् प्रीणने । ११ ॥ क्षुभ्नादित्वाण्णत्वाभावे । तृप्नोति । अतर्पीत् । दम्भूट् दम्भे । १२ ॥ दभ्नोति । ददम्भ ।

दम्भः ॥ ४ । १ । २८ ॥

स्वरस्यावित्परोक्षायामेत्वे च द्वि तयोगे च नो लुक् ॥ देभतुः ।

थे वा ॥ ४ । १ । २९ ॥

दम्भे स्वरस्यैत्वे च द्वि तयोगे च नो लुक् ॥ देभिथ । ददम्भिथ । दम्भात् । कृणुट् हिंसाकरणयोः । १३ ॥ कृणोति । अकर्णीत् चकर्ण । धिवुट् गतौ । १४ ॥ धिनोति । अधिन्वीत् । दिधिन्व । धिधृषाट् प्रागल्भ्ये । १५ ॥

॥ इति परस्मैपदिनः ॥

ष्टिघिट् आस्कन्दने । १ ॥ स्तिघ्नुते । अशौटि व्याप्तौ । २ ॥ सङ्घातेऽप्यन्ये । आशिष्ट । आष्ट । आनशे । अशिषीष्ट । अक्षीष्ट ।

॥ इत्यात्मनेपदिनो ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराम

तिष्ठितगीतार्थत्वादिगुणोपेतश्रीवृद्धिचन्द्रापरनामवृद्धिविजयचरणकम-लमिलिन्दायमानान्तेवासिसंविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीवि-जयनेमिसूरिविरचितायां लघुहेमप्रभायां स्वादयः ॥

॥ अथ-तुदादयः ॥

तुदींत् व्यथने । १ ॥

तुदादेः शः ॥ ३ । ४ । ८१ ॥

कर्त्तरि विहिते शिति ॥ तुदति । तुदते । अतौत्सीत् । अतुत्त । भ्रस्जींत् पाके । २ ॥

ग्रहव्रश्चभ्रस्जप्रच्छ ॥ ४ । १ । ८४ ॥

सस्वरान्तस्था ङ्किति य्वृत् ॥ भृज्जति।

भृज्जो भर्ज् ॥ ४ । ४ । ६ ॥

अशिति वा ॥ अभार्क्षीत् । अभ्राक्षीत् । अभर्ष्ट अभ्रष्ट । बभर्ज । बभ्रज्ज । बभर्जिथ । बभर्ष्ठ । बभ्रज्जिथ । बभ्रष्ठ । परत्वाद्भर्जादेशेऽपि स्थानिवद्भावात्पूर्वेण स्वरेण सह य्वृत् । भृज्यात् । भृज्ज्यात् । क्षिपींत् प्रेरणे । ३ ॥ अक्षैप्सीत् । अक्षिप्त । दिशींत् अतिसर्जने । ४ ॥ अदिक्षत् । अदिक्षत । कृषींत् विलेखने । ५ ॥ अकार्क्षीत् । अक्राक्षीत् । अकृक्षत् । अकृष्ट । अकृक्षत । मुच्लृंती मोक्षणे । ६ ॥

मुचादितृफदृफगुफशुभोभ शे ॥ ४ । ४ । ९९ ॥

स्वरात्नोन्तः ॥ मुञ्चति । अमुचत् । अमुक्त । षिचींत् क्षरणे । ७ ॥ सिञ्चति । अभिषिञ्चति । ह्वालिपिसिचदि । असिचत् । आसि-

षन। असिक्त। विद्लृंती लाभे।८॥ विन्दति। अविदत्। अविद। लुप्लृंती छेदने। ९॥ लुम्पति। अलुपत्। अलुप्त। लिपीत् उपदेहे। १०॥ लिम्पति। अलिपत्। अलिपत। अलिप्त॥

॥ इत्युभयपदिन॥

कृतैत् छेदने। ११॥ कृन्तति। अकर्तीत्। कर्त्स्यति। कर्तिष्यति। खिदत् परिघाते। १२॥ खिन्दति। अखेत्सीत्। पिशत् अवयवे। १३॥ पिंशति। अपेशीत्।

॥ कृत मुचादि॥

रिंपित् गतौ।१४॥ रियति। पियति। धिंत् धारणे।१५॥ धियति। सिंत् निवासगत्योः। १६॥ षूत् प्रेरणे। १७॥ अभिषुवति। अभ्यषुवत्। अभिसुषाव। सविता। मृत् प्राणत्यागे।१८॥

## म्रियतेरद्यतन्याशिषि च॥ ३। ३। ४२॥

शिति कर्त्तर्यात्मनेपदम्॥ रि शक्येति रित्वे इयादेशे। म्रियते। अमृत। ममार। मृषीष्ट। मरिष्यति। कॄत् विक्षेपे। १९॥ किरति।

## किरो लवने॥ ४। ४। ९३॥

उपाद्विषये स्सडादि॥ उपस्कीर्य मद्रका लुनन्ति।

## प्रतेश्च वधे॥ ४। ४। ९४॥

उपात् किरते स्सडादि॥ प्रतिस्किरण उपस्किरण वा हते इपल भूयात्। प्रतिचस्करे नखैः। गॄत् निगरणे। २०॥

## नवा स्वरे॥ २। ३। १०२॥

प्र प्रत्यये विहितस्य रो ल् स्यात् ॥ गिलति । गिरति । विहित-
विशेषण किम् ? गिर । लिखत् अक्षरविन्यासे । २१ ॥ कुटादिरय-
मित्येके । तन्मते लिखनीयम् । जर्च झर्चत् परिभाषणे । २२ ॥
तर्जनेऽपीत्येके । घादिरयमित्यन्ये । चर्चति । त्वचत् संवरणे । २३ ॥
ऋचत् स्तुतौ । २४ ॥ ओव्रश्चौत् छेदने ।२५॥ वृश्चति । अव्रश्चीत् ।
अव्राक्षीत् । वृश्च्यात् । ऋछत् इन्द्रियप्रलयमूर्त्तिभावयो । २६ ॥
गतावपीत्यन्ये । ऋच्छति । आर्च्छीत् । आनर्च्छ । आनर्च्छतुः ।
विछत् गतौ । २७ ॥ विच्छायति । विच्छतीत्यप्यन्ये । विच्छायां-
चकार । विविच्छ । उछैत् विवासे । २८ ॥ उच्छांचकार । मिछत्
उत्क्लेशे । २९ ॥ उछुत् उञ्छे । ३० ॥ उञ्छांचकार । प्रच्छत्
ज्ञीप्सायाम् । ३१ ॥ पृच्छति ।

अनुनासिके च च्छ्व शूट् ॥ ४ । १ । १०८ ॥

ववौ धुडादौ च प्रत्यये धातो ॥ अप्राक्षीत् । पप्रच्छ ।
पृच्छ्यात् । ऋजत् आर्जवे । ३२ ॥ सृजत् विसर्गे । ३३ ॥ अस्रा-
क्षीत् । ससर्जिथ । सस्रष्ठ । रुजोंत् भङ्गे । ३४ ॥ अरौक्षीत् ।
भुजोंत् कौटिल्ये । ३५ ॥ टुमस्जोंत् शुद्धौ । ३६ ॥ मज्जति ।

मस्जेः सः ॥ ४ । ४ । ११० ॥

स्वरात्परस्य धुडादौ प्रत्यये न् अन्तः ॥ अमाङ्क्षीत् । मम-
ज्जिथ । ममङ्क्थ । जर्ज झर्झत् परिभाषणे । ३७॥ उज्झत् उत्सर्गे ।३८॥
दोपान्त्यः । जुडत् गतौ । ३९ ॥ पृड मृडत् सुखने । ४० ॥ कडत्-
मदे ।४१॥ भक्षणेऽयमित्यन्ये । कुटादिरयमित्येके । पृणत् प्रीणने ।४२॥
तुणत् कौटिल्ये । ४३ ॥ मृणत् हिंसायाम् । ४४ ॥ द्रुणत् गतिकौ-

दिरययोश्च । ४५ ॥ पृणत् शुभे । ४६ ॥ मृणत् प्रतिज्ञाने । ४७ ॥ तुणत् शब्दोपकरणयो । ४८ ॥ घुण घूर्णत् भ्रमणे । ४९ ॥ चृतैत् हिंसाग्रथयो । ५० ॥ चर्तिष्यति । चर्त्स्यति । णुदत् प्रेरणे । ५१ ॥ अयमुभयपदीत्यन्ये । षद्लृत् अवसादने। ५२ ॥ सीदति । असदत्। इहास्य पाठो वान्तादेशार्थः। ज्वलादिपाठस्तु णार्थस्त्यर्थः। विधत् विधाने । ५३ ॥ जुन शुनत् गतौ । ५४ ॥ छुपत् स्पर्शे । ५५ ॥ रिफत् कत्थनयुद्धहिंसादानेषु । ५६ ॥ ऋफादित्येके । तृफ तृम्फत् तृप्तौ । ५७ ॥ मुचादितफेति ने। तृम्फति । नविधानबलान्नलुगभाव । तृम्फस्तु तृफति । पान्ताविमावित्यन्ये । शे नलुच न नेच्छन्ति । ऋफ ऋम्फत् हिंसायाम् । ५८ ॥ ऋफति । नलुचं नेच्छन्त्येके । इकारोपान्त्यो रादिश्चायमित्यन्यः। दृफ दृम्फत् उत्क्लेशे ।५९॥ गुफ गुम्फत् ग्रन्थने । ६० ॥ उभ उम्भत् पूरणे । ६१ ॥ शुभ शुम्भत् शोभार्थे । ६२ ॥ दृभैत् ग्रन्थे । ६३ ॥ लुभत् विमोहने । ६४ ॥ लोभिता । लोब्धा । कुरत् शब्दे । ६५ ॥ क्षुरत् विलेखने । ६६ ॥ खुरत् छेदने च । ६७ ॥ घुरत् भीमार्थशब्दयो । ६८ ॥ पुरत् अग्रगमने । ६९ ॥ मुरत् संवेष्टने ।७०॥ सुरत् ऐश्वर्यदीप्त्योः। ७१ ॥ सुसोर। षोपदेशोऽयमित्यन्ये । स्फर स्फलत् स्फुरणे ।७२॥ किलत् श्वैत्यक्रीडनयो । ७३ ॥ इलत् गतिस्वप्नक्षेपणेषु । ७४ ॥ हिलत् हावकरणे । ७५ ॥ शिल सिलत् उञ्छे । ७६ ॥ सिसेल । षोपदेशोऽयमित्येके । तिलत् स्नेहने । ७७ ॥ चलत् विलसने ।७८॥ चिल्लत् वसने । ७९ ॥ विलत् वरणे । ८० ॥ बिलत् भेदने ।८१॥ णिलत् गहने । ८२ ॥ प्रणिलति । मिलत् श्लेषणे । ८३ ॥ स्पृशत् संस्पर्शे । ८४ ॥ अस्प्राक्षीत् । अस्पार्क्षीत् । अस्पृक्षत् । रुश रिशत्

हिंसायाम् । ८५ ॥ विशत् प्रवेशने । ८६ ॥ मृशत् आमर्शने । ८७ ॥ लिश रुशैत् गतौ । ८८ ॥ इषत् इच्छायाम् । ८७ ॥ इच्छति । एषिता । एष्टा । मिषत् स्पर्द्धायाम् । ९० ॥ वृहौत् उद्यमे । ९१ ॥ वर्हिता । वर्ढा । तृहौ तृहौ स्तृहौत् स्तृंहौत् हिंसायाम् । ९२ ॥ अथ कुटादिः । कुटत् कौटिल्ये । ९३ ॥

## कुटादेर्ङिद्वदञ्णित् ॥ ४ । ३ । १७ ॥

प्रत्यय'॥ अकुटीत् । अञिणदिति किम्? चुकोट । गुंत् पुरीषोत्सर्गे ।९४॥ गुवति । अगुषीत् । धुत् गतिस्थैर्ययोः ।९५॥ णूत् स्तवने ।९६॥ अनुवीत् । धूत् विधूनने । ९७ ॥ कुचत् सङ्कोचने । ९८ । व्यचत् व्याजीकरणे । ९९ ॥

## व्यचोऽनसि ॥ ४ । १ । ८२ ॥

सस्वरान्त स्या ङ्किति य्वृत् ॥ विचति । विव्याच । विविचतुः । अकृत्प्रत्यये नाय कुटादिरित्यन्ये । गुजत् शब्दे । १०० ॥ घुटत् प्रतीघाते । १०१ ॥ शुभादित्यन्ये । चुट छुट त्रुटत् छेदने । १०२ ॥ त्रुट्यति । त्रुटति । तुटत् कलहकर्मणि । १०३ ॥ मुटत् आक्षेपप्रमर्दनयो । १०४ ॥ स्फुटत् विकसने । १०५ ॥ पुट लुठत् सम्श्लेषणे । १०६ ॥ लुड इत्यन्ये । कृडत् घसने । १०७ ॥ घनत्व इत्यन्ये । कुडत् बाल्ये च । १०८ ॥ गुडत् रक्षायाम् । १०९ ॥ जुडत् बन्धने । ११० ॥ तुडत् तोडने । १११ ॥ लुड थुड स्थुडत् संवरणे ।११२॥ वुडत् उत्सर्गे च । ११३ ॥ व्रुड भ्रुडत् सघाते । ११४ ॥ संवरणेऽप्यन्ये । त्रुड त्रुड त्रुडत् निमज्जने । ११५ ॥ त्रुणत् छेदने ।११६॥ डिपत् क्षेपे । ११७ ॥ छुरत् छेदने । ११८ ॥ छुर्यात् । स्फुरत्

टिल्यपोथ। ४५ ॥ पृणत् प्रीणने। ४६ ॥ मृणत् हिंसायाम्। ४७ ॥ द्रुणत् हिंसागतिकौटिल्येषु ॥ ४८ ॥ पुणत् शुभे। ४९ ॥ मुणत् प्रतिज्ञाने। ५० ॥

टिल्यपोथ। ४५ ॥ पृणत् शुभे। ४६ ॥ मुणत् मतिज्ञाने। ४७ ॥ कुणत् शब्दोपकरणयो। ४८ ॥ घुण घूर्णत् भ्रमणे। ४९ ॥ चृतैत् हिंसाग्रन्थयो। ५० ॥ चर्तिष्यति। चत्स्यति। णुदत् प्रेरणे। ५१ ॥ अयमुभयपदीत्यन्ये। षद्लृत् अवसादने। ५२ ॥ सीदति। असदत्। इहास्य पाठो धात्वादेशार्थः। ज्वलादिपाठस्तु णविकल्पार्थः। विधत् विधाने। ५३ ॥ जुन शुनत् गतौ। ५४ ॥ छुपत् स्पर्शे। ५५ ॥ रिफत् कत्थनयुद्धहिंसादानेषु। ५६ ॥ ऋफादित्येके। तृफ तृम्फत् तृप्तौ। ५७ ॥ मुचादित्फेति ने। तृम्फति। नविधानबलाल्लुगभाव। तृम्फेस्तु तृफति। धात्वन्तेतावित्यन्ये। ते नलुक च नेच्छन्ति। ऋफ ऋम्फत् हिंसायाम्। ५८ ॥ ऋफति। नलुक नेच्छन्त्येके। इकारोपान्त्यो रादिश्चायमित्यन्यः। दृफ दृम्फत् उत्क्लेशे। ५९ ॥ गुफ गुम्फत् ग्रन्थने। ६० ॥ उभ उम्भत् पूरणे। ६१ ॥ शुभ शुम्भत् शोभार्थे। ६२ ॥ दृभैत् ग्रन्थे। ६३ ॥ लुभत् विमोहने। ६४ ॥ लोभिता। लोब्धा। कुरत् शब्दे। ६५ ॥ क्षुरत् विलेखने। ६६ ॥ खुरत् छेदने च। ६७ ॥ घुरत् भीमार्थशब्दयो। ६८ ॥ पुरत् अग्रगमने। ६९ ॥ मुरत् संवेष्टने। ७० ॥ सुरत् ऐश्वर्यदीप्त्योः। ७१ ॥ सुसोर। षोपदेशोऽयमित्यन्ये। स्फर स्फलत् स्फुरणे। ७२ ॥ किलत् श्वैत्यक्रीडनयोः। ७३ ॥ इलत् गतिस्वप्नक्षेपणेषु। ७४ ॥ हिलत् हावकरणे। ७५ ॥ शिल सिलत् उञ्छे। ७६ ॥ सिसेल। षोपदेशोऽयमित्येके। तिलत् स्नेहने। ७७ ॥ चलत् विलसने। ७८ ॥ चिलत् वसने। ७९ ॥ विलत् वरणे। ८० ॥ बिलत् भेदने। ८१ ॥ णिलत् गहने। ८२ ॥ प्रणिलति। मिलत् श्लेषणे। ८३ ॥ स्पृशत् संस्पर्शे। ८४ ॥ अस्प्राक्षीत्। अस्पार्क्षीत्। अस्पृक्षत्। रिश रिशत्

स्फुरणे । ११९ ॥ चलन इत्यन्ये ।

निर्नेः स्फुरस्फुलोः ॥ २ । ३ । ५३ ॥

स पो वा ॥ निष्फुरति । निःस्फुरति । निष्फुरति । निस्फुरति ।

वेः ॥ २ । ३ । ५४ ॥

स्फुरस्फुलोः स पो वा ॥ विष्फुरति । विस्फुरति । स्फुलत् । सञ्चये च । १२० ॥

॥ इति परस्मैपदिनः ॥

कुङ् कूङत् शब्दे । १२१ ॥ अकुत । अकुविष्ट । गुरैति उद्यमे । १२२ ॥ हत् कुटादिः ॥ पृङत् व्यायामे । १२३ ॥ व्याप्रियते । दृङत् आदरे । १२४ ॥ आद्रियते । धृङत् स्थाने । १२५ ॥ ओवि-जैति भयचलनयोः । १२६ ॥ अथ प्राय उत्पूर्वः ॥

विजेरिट् ॥ ४ । ३ । १८ ॥

ङिद्वत् ॥ उदविजिष्ट । ओलजैङ् ओलस्जैति व्रीडायाम् । १२७ ॥ ष्वञ्जित् सङ्गे । १२८ ॥

स्वञ्जश्च ॥ २ । ३ । ४५ ॥

उपसर्गस्थात्नाम्यादेः सो द्वित्वे ऽप्यटयपि षः स्यात् परोक्षायां त्वादेरेव । परिष्वजते । पर्यष्वजत । पर्यस्वजत । नञा निर्दिष्टस्या-नित्यत्वादिटि अस्वाञ्जिष्ट ।

स्वञ्जेर्नवा ॥ ४ । ३ । २२ ॥

परोक्षा किद्वत् ॥ परिषस्वजे । परिषस्वञ्जे । स्वङ्क्त्वा । जुषैति

मीतिसेवनयोः । १२९ ॥

॥ इत्यात्मनेपदिनः ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसंविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायान्तुदादयः ॥

---

रुधृंपी आवरणे । १ ॥

रुधां स्वराच्छ्नो नलुक् च ॥ ३ । ४ । ८२ ॥

कर्त्तरि शिति ॥ रुणद्धि । रुन्धः । रुन्धन्ति । अरुधत् । अरौत्सीत् । रुन्धे । अरुद्ध । रिचृंपी विरेचने । २ ॥ रिणक्ति । रिङ्क्ते । विचृंपी पृथग्भावे । ३ ॥ विनक्ति । विङ्क्ते । युजृंपी योगे । ४ ॥ युनक्ति । युङ्क्ते । अयुनक् । क्षुदृंपी संपेषे । ५ ॥ भिदृंपी विदारणे । ६ ॥ छिदृंपी द्वैधीकरणे । ७ ॥ उछृदृंपी दीप्तिदेवनयोः । ८॥ वमनेऽप्यन्ये । छृणत्ति । छृन्ते । छर्त्स्यति । छर्दिष्यति । उतृदृंपी हिंसानादरयोः । ९ ॥ तृणत्ति । तृन्ते ।

॥ इति उभयपदिनः ॥

---

पृचैप् सम्पर्के । १० ॥ पृणक्ति । वृचैप् वरणे । ११ ॥ आन्तोऽयमित्यन्ये । जान्तोऽपि वर्जनार्थ इत्येके । तञ्चू तञ्जौप् सङ्कोचने । १२ ॥ अतनक् ॥ भञ्जौप् आमर्दने । १३ ॥ भुजप् पालनाभ्यवहारयोः । १४ ॥

### भुनजोऽत्राणे ॥ ३ । ३ । ३७ ॥

फर्त्तरि आत्मनेपदम् ॥ ओदनं भुङ्क्ते। भुनज इति किम्? भोग्यौ निर्भुजति। अत्राण इति किम्? पृथ्वीं भुनक्ति। अन्ये तु उभयपदिनमेन मन्यन्ते ॥ अञ्जौप् व्यक्तिम्रक्षणकान्तिगतिषु। १५ ॥ अनक्ति। अङ्ग्धि। आनक्।

### सिचोऽञ्जे ॥ ४ । ४ । ८४ ॥

आदिरिट् ॥ आञ्जीत्। अञ्जिता अङ्क्ता। ओविजैप् भयचलनयोः। १६ ॥ कृतैप् वेष्टने। १७ ॥ कर्तिष्यति। कर्त्स्यति। उन्दैप् क्लेदने। १८ ॥ शिष्लृप् विशेषणे। १९॥ शिनष्टि। शिण्ड्डि। पिष्लृप् सञ्चूर्णने। २० ॥ हिंसु तृहप् हिंसायाम्। २१ ॥ हिनस्ति। अहिनत्।

### तृह श्नादीत् ॥ ४ । ३ । ६२ ॥

व्यञ्जनादौ विति ॥ तृणेढि। तृण्ढः। तृहन्ति।

॥ इति परस्मैपदिनः ॥

---

खिदिंप् दैन्ये। २२ ॥ खिन्ते। विदिंप् विचारणे। २३ ॥ ञिइन्धैपि दीप्तौ। २४ ॥ इन्धाञ्चक्रे। सम्पूर्वकस्य तु समिन्धाञ्चक्रे। समीधे।

॥ इत्यात्मनेपदिनः ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजय-

नेमिसूरिविरचितायां लघुहेमप्रभायां स्वादयः ॥

तनूयी विस्तारे । १ ॥ तनोति । तनुते । तन्वः । तनुवः ।

**तन्भ्यो वा तथासि न्णोश्च ॥ ४ । ३ । ६८ ॥**

सिचो लुप् न चेट् । अतत । अतनिष्ट । अतथाः । अतनिष्ठाः । षणूयी दाने । २ ॥

**सनस्तत्रा वा ॥ ४ । ३ । ६९ ॥**

सनो लुपि सत्वामा वा ॥ असात । असत । असाथा । असथाः तनेति किम् ! असनिष्ट । क्षणूग् क्षिणूयी हिंसायाम् । ३ ॥ अक्षणीत् । क्षेणोति । उमत्ययनिमित्तमुपान्त्यगुण नेच्छन्त्येके । अमु न पठन्त्येके । ऋणूयी गतौ । ४ ॥ अर्णोति । अर्णुते । आर्त । आर्णिष्ट । तृणूयी अदने । ५ ॥ तर्णोति । घृणूयी दीप्तौ । ६ ॥ घर्णोति । घृणुते ।

॥ इत्युभयपदिनः ॥

वनूयि याचने । १ ॥ वनुते । मनूयि बोधने । २ ॥ मेने ।

॥ इत्यात्मनेपदिनः ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्परा-प्रतिष्ठितगीतार्थरत्नादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमल-मिलिन्दायमानान्तेवासिसविग्नशाखीयतपोच्छाचार्यभट्टारकश्रीविजय-नेमिसूरिविरचितायां लघुहेमप्रभायां तनादय ॥

डुक्रींग्श् द्रव्यविनिमये । १ ॥

**क्र्यादेः ॥ ३ । ४ । ७९ ॥**

भुनजोऽत्राणे ॥ ३ । ३ । ३७ ॥

कर्त्तरि आत्मनेपदम् ॥ ओदनं भुङ्क्ते । भुनज इति किम् ? भोज्यौ निर्भुजति । अत्राण इति किम् ? पृथ्वीं भुनक्ति । अन्ये तु उभयपदिनमेनं मन्यन्ते ॥ अञ्जौप् व्यक्तिम्रक्षणकान्तिगतिषु । १५ ॥ अनक्ति । अङ्ग्धि । आनक् ।

सिचोऽञ्जेः ॥ ४ । ४ । ८४ ॥

आदिरिट् ॥ आञ्जीत् । अञ्जिता अङ्क्ता । ओविजैप् भयचलनयोः । १६ ॥ कृतैप् वेष्टने । १७ ॥ कर्त्स्यति । कर्तिष्यति । उन्दैप् क्लेदने । १८ ॥ शिष्लृप् विशेषणे ।१९॥ शिनष्टि । शिण्ड्ढि । पिष्लृप् सञ्चूर्णने । २० ॥ हिसु तृहप् हिंसायाम् । २१ ॥ हिनस्ति। अहिनत्।

तृहः श्नादीत् ॥ ४ । ३ । ६२ ॥

व्यञ्जनादौ पिति ॥ तृणेढि । तृण्ढः । तृहन्ति ।

॥ इति परस्मैपदिनः ॥

---

खिदिप् दैन्ये । २२ ॥ खिन्ते । विदिप् विचारणे । २३ ॥ ञिइन्धैपि दीप्तौ । २४ ॥ इन्धाञ्चक्रे । सम्पूर्वकस्य तु समिन्धाञ्चक्रे । समीधे ।

॥ इत्यात्मनेपदिनः ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसर्वविद्याशाखीयतपोगच्छाचार्यभट्टारकश्रीविजय-

नेमिसूरिविरचितायां लघुहेमप्रभायां रुधादयः ॥

---

तनूयी विस्तारे । १ ॥ तनोति । तनुते । तन्वः । तनुवः ।

**तन्भ्यो वा तथासि न्णोश्च ॥ ४ । ३ । ६८ ॥**

सिचो लुप् न चेट् । अतत । अतनिष्ट । अतथाः । अतनिष्ठाः । षणूयी दाने । २ ॥

**सनस्तत्रा वा ॥ ४ । ३ । ६९ ॥**

सनो लुपि सत्यामा वा ॥ असात । असत । असाथा । असथा । तत्रेति किम् ? असनिष्ट । क्षणुग् क्षिणूयी हिंसायाम् । ३ ॥ अक्षणीत् । क्षेणोति । उप्रत्ययनिमित्तमुपान्त्यगुण नेच्छन्त्येके । अमु न पठन्त्येके । ऋणूयी गतौ । ४ ॥ अर्णोति । अर्णुते । आर्त । आर्णिष्ट । तृणूयी अदने । ५ ॥ तर्णोति । घृणूयी दीप्तौ । ६ ॥ घर्णोति । घृणुते ।

॥ इत्युभयपदिन. ॥

वनूयि याचने । १ ॥ वनुते । मनूयि बोधने । २ ॥ मेने ।

॥ इत्यात्मनेपदिन· ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसकलसिद्धान्तवाचस्पतितपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायां तनादय ॥

---

डुक्रींग्श् द्रव्यविनिमये । १ ॥

**क्र्यादेः ॥ ३ । ४ । ७९ ॥**

कर्तृविहिते शिति श्ना । क्रीणाति । क्रीणीतः । क्रीणन्ति क्रीणीयात् । अक्रैषीत् । अक्रेष्ट । षिंग्श् बन्धने ।२॥ मींग्श् तृप्ति कान्त्योः । ३ ॥ श्रींग्श् पाके । ४ ॥ मींग्श् हिंसायाम् । ५ । प्रमीणाति । अमासीत् । ममौ । युंग्श् बन्धने । ६ ॥ स्कुंग्श् आप्रवणे । ७ ॥

स्तम्भूस्तुम्भूस्कम्भूस्कुम्भूस्कोः श्ना च ॥ ३ । ४ । ७८ ॥

कर्तृविहिते शिति श्नु । स्तम्भ्वादयश्चत्वार सौत्राः सर्वे रोधनार्थाः । प्रथमतृतीयौ स्तम्भार्थौ, द्वितीयो निष्कोषणार्थ , तुर्यो धारणे इत्येके । स्कुनाति । स्कुनोति । स्कुनीते । स्कुनुते ।

अङ्प्रतिस्तब्धनिस्तब्धे स्तम्भ ॥ २ । ३ । ४१ ॥

उपसर्गस्थान्नाम्यादे सो द्वित्वेऽप्यट्यपि ष् स्यात् । विष्टभ्नाति । व्यष्टभत् । व्यष्टम्भीत् । वितष्टम्भ । प्रत्यष्टभ्नात् । ङादिवर्जनं किं ? व्यतस्तम्भत् । प्रतिस्तब्ध । निस्तब्धः ।

अवाच्चाश्रयोर्जाविदूरे ॥ २ । ३ । ४२ ॥

गम्यमाने स्तम्भ सो द्वित्वेऽप्यट्यपि ष् स्यात् ङविषयश्चेत् स्तम्भिर्न स्यात् । दुर्गमवष्टम्नाति । अवतष्टम्भ । अवाष्टभ्नात् । अहो वृषभस्य अवष्टम्भः । अवष्टब्धा शरत् । अवष्टब्धा सेना । चकारोऽङ इत्यस्य अनुवृत्त्यर्थः अनुक्तसमुच्चयार्थश्च । तेनोपष्टब्ध इत्यपि । ङपावादित्यवृत्ता चकारेण सूचनमनित्यार्थम् । तेनोपस्तब्ध इत्यपि । अङ इत्येव । अवातस्तम्भत् ।

स्कभ्नः ॥ २ । ३ । ५५ ॥

वेः स ष् नित्य स्यात् । निष्कभ्नाति । स्कुप्रत्यये तुन। विस्कभ्नोनि।

**व्यञ्जनाच्छ्नाहेरानः ॥ ३ । ४ । ८० ॥**

स्तभान। उत्तभान । विष्कभाण। व्यञ्जनादिति किम् । लुनीहि। श्नाहेरितिकिम् ? अश्नाति । उत्तभ्नुहि । क्नूग्श् शब्दे ।८॥ द्रूग्श् हिंसायाम् । ९ ॥ गतावित्यन्ये । ग्रहीश् उपादाने । १० ॥

**गृह्णोऽपरोक्षायां दीर्घः ॥ ४ । ४ । ३४ ॥**

विहितस्य इटः ॥ ग्रहीता । अपरोक्षायामिति किम् ? जगृहिव। पूग्श् पवने । ११ ॥

**प्वादेर्ह्रस्वः ॥ ४ । २ । १०५ ॥**

शित्यत्यादौ ॥ पुनाति । पुनीते । ल्वृत्करणपर्यन्ताः प्वादयः । प्वादेरिति किम् ? प्रीणाति । श्रीणाति। आगणान्ताद् प्वादय इत्यन्ये। ल्वृत्करण ल्वादिपरिसमाप्त्यर्थम् । तन्मते प्रिणाति श्रिणाति इत्येव । जानातीत्यत्र तु विधानसामर्थ्यान्न ह्रस्व । लूग्श् छेदने । १२ ॥ धूग्श् कम्पने । १३ ॥ अधावीत् । अधविष्ट । अधोष्ट । स्तॄग्श् आच्छादने ।१४॥ अस्तारिष्ट । अस्तरीष्ट । अस्तीर्ष्ट । स्तरिषीष्ट । स्तीर्षीष्ट । कॄग्श् हिंसायाम् । १५ ॥ वृग्श् वरणे । १६ ॥ अवारिष्ट । अवरीष्ट । अवूर्ष्ट । वूर्यात् । वरिषीष्ट । वूर्षीष्ट ॥

**॥ इति उभयपदिनः ॥**

---

ज्यांश् हानौ । १ ॥ वयोहानावित्येके। ज्यात्यथ इति यङ्कृति ॥

**दीर्घमवोऽन्त्यम् ॥ ४ । १ । १०३ ॥**

य्दत् ॥ जिनाति । अज्यासीत्। जिज्यौ । जिज्यतुः । रीङ् गतिरे-

पणयो ।२॥ लींश् श्लेषणे। ३ ॥ अलासीत् । अलैषीत् । लिलाय । ललौ। लिल्यतु । ब्लींश् वरणे।४॥ गतावित्यन्ये । प्लींश् गतौ।५॥ कॄ मॄ शॄश् हिंसायाम्।६॥ शृणाति । शृणीहि । विशश्रतुः। विशशरतुः। पॄश् पालनपूरणयोः । ७ ॥ पपरतुः। पप्रतु । वॄश् वरणे। भरणेऽपि। भॄश् भर्जने च । ८ ॥ भर्त्सने इत्यन्ये । दॄश् विदारणे । ९ ॥ भय इत्यन्ये । दद्रतुः । ददरतुः । जॄश् वयोहानौ ।१०॥ नॄश् नये ।११॥ गॄश् शब्दे । १२ ॥ ऋश् गतौ । १३ ॥ अराश्चकार । ईर्यात् ॥

॥ घृत् प्वादिर्ल्वादिश्च ॥

ज्ञांश् अवबोधने । १५ ॥ जानाति । जानीत । अज्ञासीत् । क्षिप्श् हिंसायाम् । १६ ॥ व्रींश् वरणे। १७ ॥ भ्रींश् भरणे।१८॥ हेठश् भूतप्रादुर्भावे । १९ ॥ हिठश् इत्यन्ये । हेठ्णाति । हेठान । मृडश् सुखने ।२०॥ श्रन्थश् मोचनप्रतिहर्षणयो. ।२१॥ श्रथ्नाति।

वा श्रन्थग्रन्थो नलुक् च ॥ ४ । १ । २७ ॥

स्वरस्याविरपरोक्षासेट्थवोरेत्वं च द्वि ॥ श्रेथतु । शश्रन्थतु । मन्थश् विलोडने । २२ ॥ मथान । ग्रन्थश् सन्दर्भे । २३ ॥ ग्रेथिथ। जग्रन्थिथ। कुन्थश् सङ्क्लेशे । २४ ॥ मृदश् क्षोदे । २५ ॥ गुधश् रोषे । २६ ॥ बन्धश् बन्धने । २७ ॥ अभान्त्सीत्। अबान्द्धाम् । क्षुभश् सञ्चलने।२८॥ क्षुभ्नाति। क्षुभाण। णभ तुभश् हिंसायाम् ।२९॥ नभ्नाति। प्रणभ्नाति। खवश् भूतप्रादुर्भावे। ३० ॥ खौनाति। खौनीहि । ऊट् नेच्छन्त्येके । तन्मते खव्नाति । चान्तोऽयमित्यन्ये । खच्नाति। क्लिशौश् विबाधने । ३१ ॥ अक्लेशीत् । अक्लिक्षत् ।

अशश् भोजने । ३२ ॥ इषश् आभीक्ष्ण्ये । ३३ ॥ विषश् विप्रयोगे । प्रुष प्लुषश् स्नेहसेचनपूरणेषु । ३५ ॥ प्लुषश् स्नेये । ३६ ॥ पुषश् पुष्टौ । ३७ ॥ कुषश् निष्कर्षे । ३८ ॥

## निष्कुषः ॥ ४ । ४ । ३९ ॥

स्तायशित आदिरिड् वा ॥ निष्कोष्टा । निष्कोषिता । निरकुक्षत् । निरकोषीत् । ध्रसुश् उञ्छे । ३९ ॥ उध्रश् इत्येके ।

## ॥ इति परस्मैपदिनः ॥

वृङ्श् सम्भक्तौ । १ ॥ वृणीते । अवरिष्ट । अवरीष्ट । अवृत ।

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलामिलिन्दायमानान्तेवासिससिग्मशास्त्रीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायामुत्तरार्द्धे क्र्यादयः ॥

---

चुरण् स्तेये । १ ॥

## चुरादिभ्यो णिच् ॥ ३ । ४ । १७ ॥

स्वार्थे ॥ णिचो णित्त्वाभावात् फलवति कर्त्तर्यात्मनेपदं नास्ति । अन्ये तु उभयपदित्वमिच्छन्ति णिज्विकल्पं च । चोरयति । अचूचुरत् । इह पचुणचितुणप्रभृतीनां सनकारनिर्देशमकृत्वा उदित्करणं चुरादिणिचोऽनित्यसंज्ञापकम् । तेन चोरति चिन्तति इत्यादि सिद्धम् । घुषेरविशब्दे इत्यत्र विशब्दप्रतिषेधेन ज्ञाप्यतेऽनित्यश्चुरादिणिच् इति । उपान्त्यस्येति ॥४।२।३५॥ सूत्रे लघोर्दीर्घ इति ॥४।१।६४॥ सूत्रे च णित्वजात्याश्रयणात् णिजन्तात् णिग्यपि अचूचुरत् । पृण्

पूरण । २ ॥ ऋदन्तोऽयमित्येके । घृणू स्रवणे । ३ ॥ श्वल्क वल्कण् भाषणे । ४ ॥ नक्क धक्कण् नाशने । ५ ॥ चक्क चुक्कण् व्यथने । ६ ॥ टकुण् बन्धने । ७ ॥ अर्कण् स्तवने । ८ ॥ आर्चिकत् । पिचण् कुट्टने । ९ ॥ पचुण् विस्तारे । १० ॥ सपञ्चयति । म्लेच्छण् म्लेच्छने । ११ ॥ ऊर्जण् बलप्राणनयोः । १२ ॥ तुजु पिजुण् हिंसा-बलदाननिकेतनेषु । १३ ॥ लजुण् कुत्सजीवने । १४ ॥ पूजण् पूजायाम् । १५ ॥ गज मार्जण् शब्दे । १६ ॥ मर्चमर्जावप्येके पठन्ति । तिजण् निशाने । १७ ॥ वज व्रजण् मार्गणसंस्कारगत्योः । १८ ॥ रुजण् हिंसायाम् । १९ ॥ नटण् अवस्यन्दने । २० ॥ चौरस्य उन्नाटयति । तुट चुट चुड्ड छुट्टण् छेदने । २१ ॥ कुट्टण् कुत्सने च । २२ ॥ पुट चुट पुट्टण् अल्पीभावे । २३ ॥ घुट मुण्टण् सञ्चूर्णने । २४ ॥ अट्ट स्मिटण् अनादरे । २५ ॥

## न वदन संयोगादि ॥ ४ । ३ । ५ ॥

स्वरादेर्धातोर्द्वितीयस्यैकस्वरांशस्य द्विः ॥ आट्टिटत् ॥ अट्ट अल्पीभावे इत्येके । लुण्टण् स्तेये च । २६ ॥ स्निटण् स्नेहने । २७ ॥ घट्टण् चलने । २८ ॥ खट्टण् संवरणे । २९ ॥ षट्ट स्फिटण् हिंसायाम् । ३० ॥ षट्ट बलदाननिकेतनेष्वपीत्यन्ये । स्फिटण् अनादरे इत्यन्ये । स्फुटण् परिहासे । ३१ ॥ कीटण् वर्णने । ३२ ॥ बन्धे इत्यन्ये । वट्टण् विभाजने । ३३ ॥ डान्तोऽयमित्येके । रुष्टण् रोषे । ३४ ॥ शठ श्वठ श्वठुण् संस्कारगत्योः । ३५ ॥ शुठण् आलस्ये । ३६ ॥ शुठुण् शोषणे । ३७ ॥ गुडुण् वेष्टने । ३८ ॥ लडण् उपसेवायाम् । ३९ ॥ ऊते, उपलालयति । जिह्वोन्मथने घटा-

दित्वात् णिगि ह्रस्वे लडयति । स्फुड्डण् परिहासे । ४० ॥ ओलड्डण् उत्क्षेपे । ४१ ॥ ओदिदयमित्यन्ये । पीडण् गहने । ४२ ॥

**भ्राजभासभापदीपपीडजीवमीलकणरणवणभण-श्रणह्वेहेठलुटलुपलपां न वा ॥ ४ । २ । ३६ ॥**

ङपरे णौ उपान्त्यस्य ह्रस्वः ॥ अपीपिडत् । अपिपीडत् । बहुवचनं शिष्टप्रयोगानुसारेणान्येषामपि परिग्रहार्थम् । तेन अबिभ्रसत् । अबभ्रासत् इत्यादि सिद्धम् । नडण् आघाते । ४३ ॥ खड खड्डण् भेदे । ४४ ॥ कड्डण् खण्डने च । ४५ ॥ खुड्डण् इत्येके । कुड्डण् रक्षणे । ४६ ॥ गुड्डण् वेष्टने च । ४७ ॥ चुड्डण् छेदने । ४८ ॥ मड्डण् भूषायाम् । ४९ ॥ भड्डण् कल्याणे । ५० ॥ दान्तोऽयमित्यन्ये । पिड्डण् सङ्घाते । ५१ ॥ पड्डण् इत्येके । ईडण् स्तुतौ । ५२ ॥ चड्डण् कोपे । ५३ ॥ जुड चूर्ण वर्णण् प्रेरणे । ५४ ॥ चूण तूणण् सङ्कोचने । ५५ ॥ श्रणण् दाने । ५६ ॥ अशिश्रणत् । अशश्राणत् । पूणण् सङ्घाते । चितुण् स्मृत्याम् । ५८ ॥ पुस्त बुस्तण् आदरानादरयोः । ५९ ॥ मुस्तण् सङ्घाते । ६० ॥ कृतश् सशब्दने । ६१ ॥

**कृत कीर्त्ति ॥ ४ । ४ । १२२ ॥**

कीर्त्तयति ।

**ऋदृवर्णस्य ॥ ४ । २ । ३७ ॥**

उपान्त्यस्य ङपरे णौ वा ॥ अचीकृतत् । अचिकीर्त्तत् । स्वर्त्त पथुण् गतौ । ६२ ॥ स्वर्त्त कृच्छ्रजीवनेऽपीत्यन्ये । श्रथण् प्रतिहर्षे । ६३ ॥ प्रतियत्ने इत्यन्ये । पृथण् प्रक्षेपणे । ६४ ॥ अपीपृथत् । अपपर्थत् । पर्थण् इत्येके । पाथण् इत्यन्ये । मथण् मस्याने । ६५ ॥

स्मृदृत्वरप्रथम्रदस्तृस्पशेरः ॥ ४ । १ । ६५ ॥

असमानलोपे स्परे णौ द्वित्वे पूर्वस्य ॥ इत्यपवादः । अपपथत् छदण् सवरणे । ६६ ॥ चुटण् सञ्चादने । ६७ ॥ मिदृण् स्नेहने । ६८ ॥ नायमुदित् इत्येके । गृर्दण् निकेतने । ६९ ॥ पूर्वनिकेतने इत्येके । गूर्दयति । छर्दण् वमने । ७० ॥ गर्दण्णन्ते इत्येके । पुषुण् हिंसायाम् । ७१ ॥ दान्तोऽयमित्यन्ये । पर्धण् छेदनपूरणयोः ।७२॥ गर्धण् अभिकाङ्क्षायाम् । ७३ ॥ यन्थ यथण् सयमने । ७४ ॥ श्रुथुण् गतौ । ७५ ॥ क्षपुण् क्षान्तौ । ७६ ॥ कूपण् समुच्छ्राये । ७७ ॥ अपोपदेश इत्यन्ये । उकारो ह्रस्व इत्येके । डिपण् क्षेपे ।७८॥ दपण् व्यस्ततायां वाचि । ७९ ॥ डपु डिपुण् सङ्घाते । ८० ॥ अभिमर्दन इत्येके । भान्तावेतावित्यन्ये । शूर्पण् माने । ८१ ॥ शुल्वण् सर्जने च । ८२ ॥ डपु डिपुण् क्षेपे । ८३ ॥ केचित्तु दमदिशुन्भूनपीहा- धीयते । सम्बण् सम्बन्धे । ८४ ॥ पोपदेशोऽयमित्यन्ये । तालव्या- दिरयमित्येके । साम्बेत्येके । कुपुण् आच्छादने । ८५ ॥ त्सुयु तुपुण् अर्दने । ८६ ॥ तुवुण इत्यप्यन्ये । पुर्वण् निकेतने । ८७ ॥ यमण् परिवेपणे ।८८॥ यामयत्यतिथीन् । परिवेषणादन्यत्र तु ॥

यमोऽपरिवेपणे णिचि च ॥ ४ । २ । २९ ॥

अणिचि णौ ह्रस्वः ञिणम्परे तु वा दीर्घः ॥ यमयति । यम परिवेपण इत्यन्ये । तन्मते उदाहरणप्रत्युदाहरणयोर्व्यत्यासः । णाचि- ति सिद्धेऽस्य णिचि चेति वचनात् अन्येषां णिचि न । स्यामयते । निशा- मयते । व्ययण् क्षये । ८९ ॥ यतुण् सङ्कोचने । ९० ॥ कुद्रण् अनृ- तभाषणे । ९१ ॥ गादिरयमित्यन्ये ॥ भ्रभ्रण् गतौ । ९२ ॥ तिल्लण् स्नेहने । ९३ ॥ जल्पण् अपवारणे । ९४ ॥ क्षल्पण् शौचे । ९५ ॥

पुलण् समुच्छ्राये । ९६ ॥ बिलण् भेदे । ९७ ॥ भिलेत्येके। तलण् प्रतिष्ठायाम् । ९८ ॥ तुल्ण् उन्माने । ९९ ॥ तुलयतीति तु तुला-शब्दात् णिज्बहुलमिति णिचि रूपम् । दुलण् उत्क्षेपे । १०० ॥ बुलण् निमज्जने । १०१ ॥ मुलण् रोहणे । १०२ ॥ कलकिल-पिलण् क्षेपे । १०३ ॥ पलण् रक्षणे । १०४ ॥ इल्ण् प्रेरणे । १०५ ॥ चलण् भृतौ । १०६ ॥ सान्त्वण् सामप्रयोगे । १०७ ॥ षोपदेशोऽयमित्येके । साम सान्त्वप्रयोगे इत्यन्ये। धूशण् कान्तीकरणे । १०८॥ धूपण् इत्यन्ये। धूसण् इत्येके। श्लिषण् श्लेषणे।१०९॥ लुषण् हिंसायाम् । ११० ॥ रुपण् रोषे ।१११॥ प्युषण् उत्सर्गे । ११२॥ पसुण् नाशने । ११३ ॥ जसुण् रक्षणे । ११४ ॥ पुसुण् अभि-मर्दने । ११५ ॥ त्रुस पिस जस बर्हण् हिंसायाम् ।११६॥ ष्णिहण् स्नेहने । ११७ ॥ म्लक्षण् म्लेच्छने । ११८ ॥ भक्षण् अदने ।११९॥ पक्षिण् परिग्रहे । १२० ॥ लक्षीण् दर्शनाङ्कनयोः । १२१ ॥ फलवत्कर्तर्यात्मनेपदे लक्षयते। अन्यत्र लक्षयति ॥

॥ इतो अर्थविशेषे आलक्षिण. ॥

ज्ञाण् मारणादिनियोजनेषु । १२२ ॥

मारणतोषणनिशाने ज्ञश्च ॥ ४ । २ । ३० ॥

णिचि अणिचि च णौ ह्रस्व ॥ अणिम्परे तु णौ वा दीर्घ ।
केचित्तु निशामत इच्छन्ति ।

अर्तिरीब्लीह्रीक्नूयिक्ष्माय्यातां पुः ॥४।२।२१॥

णावन्त ॥ मारणे सञ्ज्ञपयति पशुम् । तोषणे विज्ञपयति गुरुम् । निशाने महापयति शस्त्रम् । नियोजने आज्ञापयति भृत्यम् । उक्तार्थेभ्योऽन्यत्र तु क्र्यादित्वाच्छ्ना। जानाति। च्युण् सहने ।१२३॥ भूण् अवकल्कने । १२४ ॥ विकल्कने इत्येके । अवकल्पन इत्यन्ये ।

## ओजोन्त स्थापवर्गेऽवर्णे ॥ ४ । १ । ६० ॥

द्विर्वे पूर्वस्य सनि इ. ॥ अबीभवत् ॥ क्षुक्ण् भषणे ।१२५॥ भषणे इत्यन्ये । रक लक रग लगण् आस्वादने । १२६ ॥ आप्राप्त्यासादने इत्यन्ये । रागयति । लागयति । णिगि घटादित्वात् ह्रस्व । लिगुण् चित्रीकरणे । १२७ ॥ चर्चण् अध्ययने । १२८॥ चर्च परिभाषणे इति केचित् । चर्चति । अचण् विशेषणे । १२९ ॥ मुचण् प्रमोचने । १३० ॥ प्रयोजने इत्यन्ये। अर्जण् प्रतियत्ने ।१३१॥ भजण् विश्राणने ।१३२॥ चट स्फुटण् भेदे ।१३३॥ चाटयति । णिचोऽनित्यत्वात् चटति । घट्ण् सङ्घाते ।१३४॥ घाटयति । अन्यत्र णिगि घटयति । हन्त्यर्थाश्च येऽन्यत्र हिंसार्था पठिता तेऽप्यत्र ज्ञेया ॥

## ञ्णिति घात् ॥ ४ । ३ । १०० ॥

हन्ते ॥ घातयति । अनेनैवसिद्धेऽन्येषां हिंसार्थानां चुरादौ पाठ आत्मनेपदादिगतरूपभेदार्थं । कणण् निमीलने । १३५ ॥ अचीकणत् । अचकाणत् । यतण् निकारोपस्कारयो' । १३६ ॥ निरश्च प्रतिदाने । १३७ ॥ निर्यातयेति ऋणम् । शब्दण् उपसर्गात् भाषाविष्कारयो । १३८ ॥ विशब्दयति । योगविभागोऽत्रेति केचित् । शब्दण् उपसर्गात् इत्येक । भाषाविष्कारयोरित्यपर' प्रशब्दयति। द्वितीयोऽनुपसर्गार्थं । शब्दयति । सूदण् आश्रवणे । १३९ ॥ क्षरण

इत्येके। आद: क्रन्दण् सातत्ये ।१४०॥ ष्वदण् आस्वादने ।१४१॥
मसरल इत्यन्ये। आस्वद सकर्मकात् अस्वादयति यवागूम्। मुदण्
मर्षों। १४२ ॥ मृषण् मसहने। १४३ ॥ अमिमृषत्। अममर्षत्।
कृपण् अवकल्कने। १४४॥ कल्पयति। अवकल्पने इत्यन्ये। जसुण
मक्षे। १४५ ॥ अमण् रोगे। १४६ ॥ चरण् असशये ।१४७॥
मवर इत्यपे। पूरण् आप्यायने ।१४८॥ दलण् विदारणे ।१४९॥
गिलिदस्पती इत्येके। न्विण् अर्दने। १५० ॥ पश पपण् बन्धने।
१५१ ॥ पम् इत्येके। पुषण् धारणे। १५२ ॥ घुषण् विशब्दने।
१५३ ॥ अविमन्द्वनइत्येके। ऋदित्करण चुरादिणिचोऽनित्यत्वे-
लिङ्गम्। मजुघत् अघाषीत्। जुघुषुः पुष्पमाणा इत्यादि सिद्धम्। नाय
मत्युद इत्येक। आड क्रन्दे। १५४ ॥ सातत्य इत्यन्ये। भूप
मलङ्कारे। १५५ ॥ जमण् ताडने। १५६ ॥ त्रसण् वारणे।
१५७ ॥ धारणे इत्यन्ये। ग्रहणे इत्येके। वसण् स्नेहछेदावहरणेषु।
१५८ ॥ दमस् इत्येके। १५९ ॥ उठ इत्येके। उकारादिरय-
मित्यन्ये। प्रमण् ग्रहणे। १६० ॥ लसण् शिल्पयोगे। १६१ ॥
लभ इत्येके। लस् इत्यन्ये। अर्हण् पूजायाम्। १६२ ॥ आर्जिहत्।
लक्षण मर्षणे। १६३ ॥ श्लोक तर्क रघु लघु लोचृ विच्छ अञ्जु तुजु
मनु मनु रुगु मनु पट पुट लुट घट घट्ट हन पुष नद हृष ग्रुप घुष
वा विल रघृ कृप्र यतृ मितृ कुसु न्मु गर्ह बृह वल्ह अर्ह वहु महण्
भाषार्थाः ॥१६४॥ भाजार्थाश्चेति पारायणम्। भाषार्थाश्चेति केचित्।
संकर्षति। ईर्तर्पति। इत्ययति। मरामयति। इत्यादि॥

॥ इति परस्मैपदिन ॥

युणि जुगुप्सायाम् । १ ॥ यावयते । अन्यत्र यौति । युनाति । युनीते । युजिरयमित्येके ॥ गृणि विज्ञाने । २ ॥ विज्ञापन इत्येके । घृणि इत्यन्ये । वञ्चिण् प्रलम्भने । ३ ॥ कुटिण् प्रतापने । ४ ॥ मदिण् तृप्तियोगे । ५ ॥ तृप्तिशोधन इत्येके । विदिण् चेतनाख्यान-निवासेषु । ६ ॥ विवादेऽप्यन्ये । मनिण् स्तम्भे । ७॥ वल्गि भल्ङिण् आभण्डने । ८ ॥ दिविण् परिकूजने । ९ ॥ ग्रपिण् शक्तिबन्धे । १० ॥ आवर्पयति ग्रामं । शक्ति बध्नातीत्यर्थः । शक्तिबन्ध भज-नामामर्थ्यमित्यन्ये । कुस्तिण् अवक्षेपे । ११ ॥ लक्षिण् अन्वेषणे । १२ ॥ अथार्थान्तरेऽप्यात्मनेपदिनश्चुराद्य एवोच्यन्ते । हिष्किं किष्किण् हिंसायाम् । १३ ॥ निष्किण् परिमाणे । १४ ॥ तर्जिण् सन्तर्जने । १५ ॥ कुटिण् अप्रमादे ।१६॥ आमदान इत्यन्ये । त्रुटिण् छेदने । १७ ॥ डान्तोऽयमित्येके । शठिण् श्लाघायाम् । १८ ॥ शटी-त्यन्ये । शलीत्येके । कूणिण् सङ्कोचने । १९॥ तूणिण् पूरणे ।२०॥ तूलेत्यन्ये । भ्रूणिण् आशसायाम् । २१ ॥ आशङ्कायामित्यन्ये । चितिण् संवेदने । २२ ॥ वस्ति गन्धिण् अर्दने । २३ ॥ डपि डिपि डपि डिंपि डभि डिम्भिण् सङ्घाते । २४॥ स्यमिण् वितर्के ।२५॥ स्यामयते । णिगि स्यमयति । शमिण् आलोचने । २६ ॥ कुस्मिण् कुस्मये ।२७॥ कुस्मेतिनाम्नो णिच् इत्येके । गुरिण् उद्यमे । २८ ॥ तन्त्रिण् कुटुम्बधारणे । २९ ॥ कुटुम्बेति धातुरित्यन्ये । मन्त्रिण् गुप्तभाषणे । ३० ॥ ललिण् ईप्सायाम् । ३१ ॥ गलिण् स्रावणे इत्येके । स्पशिण् ग्रहणश्लेषणयोः । ३२ ॥ दशिण् दशने । ३३ ॥ दशिण् दाने इत्येके । दसिण् दर्शने च । ३४ ॥ भर्त्सिण्

सन्तर्जने । ३५ ॥ यक्षिण् पूजायाम् । ३६ ॥

## ॥ इति आत्मनेपदिनः ॥

इतोऽदन्ताः ॥ अदन्तत्वे हि सुखयति रचयतीत्यादावल्लुक्स्थानिवत्त्वाद्गुणवृद्ध्यभावः। अररचत् असुसुखत् अत्र समानलोपित्वात्सन्वद्भावदीर्घयोरभावः। अमृमृचत् अत्रोपान्त्य ह्रस्वाभावः। अङ्कादीनां त्वत्र पाठः पूर्वाचार्यानुरोधात्। णिजभावे शब्द्सिद्ध्यर्थ इत्येके। अन्ये तु दु खापयतीत्यादि मन्यन्ते । अङ्कण् लक्षणे । १ ॥ अनदन्त एवायमित्येके । अङ्कयति । ओर्जौन्तेति सूत्रे जान्तस्थावर्गग्रहणं ज्ञापयति णौ यत्कृतं कार्यं तत्सर्वं स्थानिवद् भवतीति तेन आञ्चकत् । एतच्च ज्ञापकमवर्णं एव द्रष्टव्यं तेनाचिकीर्त्तत् । श्लेष्कण् दर्शने । २ ॥ सुखदु खण् तत्क्रियायाम् । ३ ॥ अङ्कण् पदलक्षणयोः । ४ ॥ अघण् पापकरणे । ५ ॥ रचण् प्रतियत्ने । ६ ॥ सूचण् पैशुन्ये । ७ ॥ असुसूचत् । भाजण् पृथक्कर्मणि । ८ ॥ सभाजण् प्रीतिसेवनयोः । ९ ॥ लज लजुण् प्रकाशने । १० ॥ कूटण् दाहे । ११ ॥ आमन्त्रणेऽपीत्येके । पट वटुण् ग्रन्थे । १२ ॥ खेटण् भक्षणे । १३ ॥ खेडिरत्यन्ये । खोटण् क्षेपे । १४ ॥ डान्तोऽयमित्येके । दान्तोऽयमित्यन्ये । पुटण् संसर्गे । १५ ॥ वटुण् विभाजने । १६ ॥ वण्टापयतीत्येके । शठ श्वठण् सम्यग्भाषणे । १७ ॥ दण्डण् दण्डनिपातने । १८॥ व्रणण् गात्रविचूर्णने।१९॥ वर्णण् वर्णक्रियाविस्तारगुणवचनेषु। २० ॥ पर्णण् हरितभावे । २१ ॥ कर्णण् भेदे । २२ ॥ तूणण् सङ्कोचने । २३ ॥ गणण् सङ्ख्याने । २४ ॥

ई च गण. ॥ ४ । १ । ६७ ॥

इपरे णौ द्वित्वे पूर्वस्याः॥ अजीगणत् । अजगणत् । अदन्तत्व
च गुणादीनां णिच्सन्नियोग एवान्ते वक्ष्यते। ततोऽनित्यत्वेन णिज-
भावे जगणतु जगणिथ इत्यत्राम् न । अचीकथदिति प्रयोगदर्शना-
दन्येषामपि यथादर्शनमीत्वमिच्छन्त्येके । गुण गुण केतण् आम-
न्त्रणे । २५ ॥ केतयति । अय निश्रावणनिमन्त्रणयोरपीत्येके ।
पतण् गतौ वा । २६ ॥ वा शब्दो णिजदन्तत्वयोर्युगपद्विकल्पार्थ ।
पतयति । अपपतत् । पक्षे पतति । णिच्सन्नियोगेऽप्यनदन्तोऽय-
मित्येके, तन्मते पातयति । पातण् गतिसुखसेवनयोः । २७ ॥ सु
सेवनयोरित्येके । वा इत्येके वापयति । कथण् वाक्यप्रबन्धे । २८
वाक्यप्रतिबन्धइत्यन्ये । वदन इत्यपरे । अचकथत् । श्रथण् दौर्बल
२९ ॥ श्रथयति । लत्वे श्लथयति । छेदण् द्वैधीकरणे । ३०
गदण् गर्जे ।३१॥ अन्धण् दृष्टयुपसंहारे ।३२॥ आन्दधत् । स्तन
गर्जे । ३३ ॥ ध्वनण् शब्दे । ३४ ॥ स्तेनण् चौर्ये । ३५ ॥ अति
स्तेनत् । ऊनण् परिहाणे । ३६ ॥ मा भवानूननत्। कृपण् दौर्बल्ये
३७ ॥ रूपण रूपक्रियायाम् । ३८ ॥ क्षप ल्लाभण् प्रेरणे । ३९ ।
लम्भणित्यन्ये । भामण् क्रोधे । ४० ॥ गोमण् उपलेपने । ४१ ॥
सामण् सान्त्वने । ४२ ॥ श्रामण् आमन्त्रणे । ४३ ॥ स्तोमण्
श्लाघायाम् । ४४ ॥ व्ययण् वित्तसमुत्सर्गे । ४५ ॥ गतावित्येके ।
वित्तेति धात्वन्तरमित्येके । सूत्रण् विमोचने । ४६ ॥ मूत्रण् प्रश्रवणे।
४७ ॥ पार तीरण् कर्मसमाप्तौ । ४८ ॥ कत्र गात्रण् शैथिल्ये ।
४९ ॥ चित्रण् चित्रक्रियाकदाचिद्दृष्टयोः । ५० ॥ वैचित्र्यकरणा-
र्थोऽय न चित्रक्रियार्थ इत्यन्ये । छिद्रण् भेदे । ५१ ॥ मिश्रण् सम्प-
र्कने । ५२ ॥ वरण् ईप्सायाम् । ५३ ॥ स्वरण् आक्षेपे । ५४ ॥

शारण् दौर्बल्ये । ५५ ॥ शरेत्येके । कुमारण् क्रीडायाम् । ५६ ॥ क्लान्तोऽयमित्येके । कलण् सङ्ख्यानगत्योः । ५७ ॥ कलयति । क्षेपे तु कालयति गाः । शीलण् उपधारणे । ५८ ॥ वेल कालण् उपदेशे । ५९ ॥ वेलण् कालोपदेश इत्येके । पल्यूलण् लवनपवनयोः । ६० ॥ वल्यूलेत्यन्ये । अंशण् समाघाते । ६१ ॥ असेति चन्द्रः । पपण् अनुपसर्गः ।६२॥ गवेषण् मार्गणे ।६३॥ मृषण् क्षान्तौ ।६४॥ णिचोऽनित्यत्वे मृषति । रसण् आस्वादनस्नेहनयोः । ६५॥ वासण् उपसेवायाम् । ६६ ॥ निवासण् आच्छादने । ६७ ॥ चहण् कल्कने । ६८ ॥

## चहण शाठ्ये ॥ ४ । २ । ३१ ॥

णिचि णौ च ह्रस्वो ञिणम्परे तु वा दीर्घः॥ चहयति । महण् पूजायाम् । ६९ ॥ रहण् त्यागे । ७० ॥ रहुण् गतौ । ७१ ॥ रहयति । रहापयतीत्यपि । स्पृहण् ईप्सायाम् । ७२ ॥ कुसण् पारुष्ये। ७३॥ णिजभावेऽप्यदन्तत्वार्थोऽस्य पाठस्तेनानेकस्वरत्वाद्यङ् न भवति। एवं गविप्रभृतीनामपि ।

## ॥ इत्यदन्ताः परस्मैपदिनः ॥

---

मृगणि अन्वेषणे । १ ॥ अर्थणि उपयाचने । २ ॥ पदणि गतौ । ३ ॥ सङ्ग्रामणि युद्धे । ४ ॥ अथ परस्मैपदीत्येके । शूर वीरणि विक्रान्तौ । ५ ॥ सत्रणि सन्दानक्रियायाम् ।६॥ सन्तानक्रियायामित्येके । स्थूलणि परिबृंहणे । ७ ॥ गर्वणि माने ।८॥ गृहणि ग्रहणे । ९ ॥ कुहणि विस्मापने । १० ॥

## ॥ इत्यदन्ता आत्मनेपदिनः ॥

घुजण सम्पर्चने । १ ॥

युजादेर्नवा ॥ ३ । ४ । १८ ॥

स्वार्थे णिच् ॥ योजयति । योजति । लीण् द्रवीकरणे । २ ॥

लियो नोन्त. स्नेहद्रवे ॥ ४ । २ । १५ ॥

गम्ये णौ वा ॥ घृतं विलीनयति । विलाययति । स्नेहद्रव इति किम्? अयो विलाययति। लीङ् लीनोर्योति वात्वमस्यापीत्येके सम्मते।

लोल. ॥ ४ । २ । १६ ॥

लारूपस्य णौ स्नेहद्रवे गम्ये वा ॥ घृतं विलालयति विलाययति वा । स्नेहद्रव इत्येव जटाभिरालापयते । लीङ् लीन इति वक्ष्यमाणेनात्मनेपदमात्वञ्चास्याऽपि । णिच्यपीत्येके फल्त्वाम्लापयते णिजभावे विलयति। मीण् मतौ ।३॥ गतावित्यन्ये। मीगण् तर्पणे ।४॥

धूग्प्रीगोर्न. ॥ ४ । २ । १८ ॥

णौ ॥ प्रीणयति । णित्त्वं णिजभावे उभयपदार्थम् । प्रयति । प्रयते । यौजादिकप्रीगोर्नेच्छन्त्येके सम्मते मापयति । धूगण् कम्पने । ५ ॥ धूनयति । नेनेच्छन्त्येके । धावयति । पक्षे धवति । धवते । अधावीत् । अधाविष्ट अधोष्ट । छगण् आवरणे ।६॥ जॄ वयोहानौ ।७॥ चीक श्रीकण् आमर्षणे । ८ ॥ मार्गण अन्वेषणे । ९ ॥ पृचण् सम्पर्चने । १० ॥ समपीपृचत् । समपपर्चत् । अपर्चीत् । रिचण् वियोजने च । ११॥ वचण् भाषणे ।१२॥ सदेशन इत्येके । वच्यात् । अर्चिण् पूजायाम् । १३ ॥ वृजैण् वर्जने । १४ ॥ मृजौण् शौचालङ्कारयो । १५ ॥ मार्जयति । मार्जति । अममार्जत् । अमीमृजत् ।

औदित्त्वाद्वेट्। कठुण् शोके। १६ ॥ ग्रन्थ ग्रन्थण् सन्दर्भे। १७ ॥ क्रथ अर्दिण् हिंसायाम्। १८ ॥ अर्दयति। अर्दते। श्रथण् ग्रन्थने च। १९ ॥ वदिण् व्यापणे। २० ॥ संदेशन इत्येके। वादयति। सवदते। छदण् अपवारणे। २१ ॥ आङः सदण् गतौ। २२ ॥ आसादयति। आसीदति। आसदतीत्येके। अनुस्वारेदयमित्येके। छृदण् सन्दीपने।२३॥ कृतच्छृदेति तु न तृद साहचर्यादृधादेरेव छृदस्तत्र ग्रहणात्। शुधिण् शुद्धौ। २४ ॥ तनूण् श्रद्धाघाते।२५॥ श्रद्धोपकरणयोरित्यन्ये। उपसर्गात् दैर्घ्ये। २६ ॥ मानण् पूजायाम्। २७ ॥ मनण् इत्येके। तपिण् दाहे। २८ ॥ तृपण् प्रीणने। २९ ॥ सदीपन इत्येके। आप्लृण् लम्भने। ३० ॥ आपिपत्। ईभैण् भये। ३१॥ ईरण् क्षेपे।३२॥ गतावित्येके। मृषिण् तितिक्षायाम्। ३३ ॥ अर्चि, अर्दि, तर्पि, वदि, मृषयः परस्मैपदिन इत्यन्ये। शिषण् असर्वोपयोगे। ३४ ॥ विपूर्वो अतिशये।३५॥ जुषण् परितर्कणे।३६॥ परितर्पण इत्यपरे। धृषण् प्रसहने। ३७ ॥ आदिदयमित्येके। हिसुण् हिंसायाम्। ३८ ॥ गर्हण् विनिन्दने। ३९ ॥ षहण् मर्षणे। ४० ॥ बहुलमेतन्निदर्शनम्। यदेतद्भ्वत्यादिधातुपरिगणनं तद्बाहुल्येन निदर्शनत्वेन ज्ञेयम्। तेनात्रापठिता अपि क्विपप्रभृतयो लौकिकाः स्तम्भप्रभृतयः सौत्राश्चुलुम्पादयश्च वाक्यकरणीया धातव उदाहार्याः। यद्वा भ्वाधादिगणाएकोक्ता. स्वार्थणिजन्ता अपि बहुलं भवन्ति। चुरादिपाठस्तु निदर्शनार्थः। यदाहुः।

॥ निवृत्तप्रेषणाद्धातो प्राकृतेऽर्थे णिजिष्यते ॥

रामो राज्यमकारयदकरोदित्यर्थः। प्रयोज्यव्यापारेऽपि प्रयोक्तृव्यापारानुप्रवेशो णिचं विनापि बुद्ध्यारोपाद्बहुलं भवति। जजान गर्भं

मथवा इन्द्रोऽजीजनदित्यर्थे । अथवा णिङ् बहुलमित्येव सिद्धे सूत्र-मत्र, छिद्रान्धादय उदाहरणार्थास्तेनादन्तेष्वनुक्ता अपि बहुलं द्रष्टव्या ।

॥ इति चुरादयः परस्मैपदिनः ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्परा-प्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकम-लमिलिन्दायमानान्तेवासिसर्वतन्त्रशास्त्रीयतपोगच्छाचार्यभट्टारकश्रीवि-जयनेमिसूरिविरचितायां लघुहेमप्रभायां चुरादयो णितो धातवः ॥

---

भुवः प्राप्तौ णिङ् ॥ ३ । ४ । १९ ॥

धातोर्वा ॥ भावयते । भवते । प्राप्नोतीत्यर्थः । अन्यत्र भवतीत्येव । प्राप्त्यर्थाभावेऽपि कश्चिदात्मनेपदम् । प्राप्त्यर्थेऽपि परस्मैपदमित्यन्ये ॥

प्रयोक्तृव्यापारे णिग् ॥ ३ । ४ । २० ॥

धातोर्वा ॥ कारयति । वासयति भिक्षा । राजानमागमयति । कंसं घातयति । पुष्येण चन्द्रं योजयति । उज्जयिन्याः प्रस्थितो माहि-ष्मत्यां सूर्यमुद्गमयति । भावयति । भावयते ॥ ओर्जान्तस्थापवर्गेऽ-वर्णे ॥ अबीभवत् । जु इति सौत्रो धातुः, अजीजवत् । अयीयवत् । अरीरवत् । अलीलवत् । अपीपवत् । अमीमवत् । जान्तस्थापवर्ग इति किम् ? जुहावयिषति । अवर्णान्त इति किम् ? बुभूषति ॥

श्रुस्रुद्रुप्रुप्लुच्योर्वा ॥ ४ । १ । ६१ ॥

सनि द्वित्वे पूर्वस्योतोऽवर्णान्तायामन्तस्थायां परस्यामि ॥ अशि-श्रवत् । अशुश्रवत् । असिस्रवत् । असुस्रवत् । अदिद्रवत् । अदुद्रवत् ।

अपिप्रवत् । अपुप्रवत् । अपिप्लवत् । अपुप्लवत् । अचिच्यवत् अचुच्यवत् । अशशासत् । अडुढौकत् । अचचकासत् । अचीचकासदित्यपरे । राजयति । अरराजत् ॥

## घटादेर्ह्रस्वो दीर्घस्तु वा ञिणम्परे ॥ ४ । २ । २४ ॥

णौ ॥ घटयति । स्मरयति । असस्मरत् । अददरत् । अतत्वरत् ॥

## वा वेष्टचेष्टः ॥ ४ । १ । ६६ ॥

असमानलोपे ङपरे णौ द्वित्वे पूर्वस्यात्॥ अववेष्टत् । अविवेष्टत् अचचेष्टत् । अचिचेष्टत् ॥

## कगेवनूजनैजृष्क्रसरञ्जः ॥ ४ । २ । २५ ॥

णौ ह्रस्वः ञिणम्परे तु णौ वा दीर्घः ॥ कगयति । उपवनयति जनयति । जरयति । क्नसयति ॥

## णौ मृगरमणे ॥ ४ । २ । ५१ ॥

रञ्जेरुपान्त्यनो लुक् । रजयति मृगं व्याधः । मृगरमण इति किम् ? रञ्जयति रजको वस्त्रम् । केचित्तु ष्णसूच् निरसने इत्यस्यापीच्छन्ति ।

## अमोऽकम्यमि चमः ॥ ४ । २ । २६ ॥

णौ ह्रस्व ञिणम्परे तु वा णौ दीर्घः ॥ रमयति । गमयति अकम्यमि चम इति किम् ? । कामयते । आमयति । आचामयति

## पर्यपात्स्खदः ॥ ४ । २ । २७ ॥

णौ ह्रस्व ञिणम्परे तु वा दीर्घ ॥ परिस्खदयति । अपस्खदयति घटादित्वात्सिद्धे नियमार्थं वचनम् । तेन प्रस्खादयति । अन्ये ।

पर्यपपूर्वस्य स्वरदीर्घस्य निषेधमिच्छन्ति ॥

शमोऽदर्शने ॥ ४ । २ । २८ ॥

णौ ह्रस्वः ञिणम्परे तु वा दीर्घः ॥ शमयति रोगम् । इति किम् ? । निशामयति रूपम् । केचिद्दर्शने ऽपीच्छन्ति ।

ज्वलह्वलह्मलग्लास्नावनूवमनमोऽनुपसर्गस्य वा ॥ ४ । २ । ३२ ॥

णौ ह्रस्व ॥ ज्वलयति । ज्वालयति । ग्लपयति । ग्लापयति । स्नपयति । स्नापयति । अनुपसर्गस्येति किम् ? प्रज्वलयति । निन्यादपि द्विर्वचनात् प्रागेवोपान्त्यह्रस्व औणेर्ञ्डितकरणाज्ज्ञापकात् । मा भवानटिटत् । मा भवानीदिधत् । मा भवान मेदिधत् । आटिटत् । आशिशत् । भ्राजयति । भ्राज भासेति वा ह्रस्वत्वे अबिभ्रजत् । अबभ्राजत् इत्यादि । अवीवृतत् । अववर्तत् । अमीमृजत् । अममार्जत् । घ्रापयति ॥

जिघ्रतेरि ॥ ४ । २ । ३८ ॥

उपान्त्यस्य ङपरे णौ वा ॥ अजिघ्रिपत् । अजिघ्रपत् ॥

तिष्ठते ॥ ४ । २ । ३९ ॥

उपान्त्यस्य ङपरे णौ इ ॥ अतिष्ठिपत् ॥

ऊद् दुषो णौ ॥ ४ । २ । ४० ॥

उपान्त्यस्य ॥ दूषयति ॥

चित्ते वा ॥ ४ । २ । ४१ ॥

चित्तकर्तृकस्य दुषेरुपान्त्यस्य णौ ऊद् वा ॥ मनो दूषयति । मनो

दीपयति मैत्रः । निगूहयति ॥

इवेर्वा ॥ ४ । १ । ८९ ॥

सस्वरान्तस्या इपरे सन्परे च णौ विषये य्वत् ॥ अशूशयत् । अशिश्वयत् । स्वपेर्यङ्हे चेति य्वति असूषुपत् । अर्तिरीति पौ । अर्पयति । आर्पिपत् । रेपयति । क्लेपयति । ह्रेपयति ॥

य्वोः प्वय्व्यञ्जने लुक् ॥ ४ । ४ । १२१ ॥

क्नोपयति । य्वर्जन किम् ? क्नूय्यते । पुग्रहणममत्ययार्थम् । क्ष्मापयति ॥

णौ क्रीजीङः ॥ ४ । २ । १० ॥

आत् ॥ क्रापयति । जापयति । अध्यापयति ॥

णौ सनूडे वा ॥ ४ । ४ । २७ ॥

इङो गाः ॥ अध्यजीगपत् । अध्यापिपत् । णाविति किम् ? अधिजिगांसते । सनङ इति किम् ? अध्यापयति ॥

सिध्यतेरज्ञाने ॥ ४ । २ । ११ ॥

णौ स्वरस्यात् ॥ मन्त्र साधयति । अज्ञान इति किम् ? तपस्तापस सेधयति ॥

चिस्फुरोर्नवा ॥ ४ । २ । १२ ॥

णौ स्वरस्यात् ॥ चापयति । चाययति । स्फारयति । स्फोरयति ॥

वियः प्रजने ॥ ४ । २ । १३ ॥

णौ वा आत् ॥ पुरो वातो गाः प्रवापयति । प्रवाययति ॥

रुह प. ॥ ४ । २ । १४ ॥

णौ वा ॥ रोपयति । रोहयति वा तरम् । लियो नोन्त इति

**रुदविदमुषग्रहस्वपप्रच्छः सन् च ॥ ४ । ३ । ३२ ॥**

क्त्वा किद्वत् ॥ जिघृक्षति । जुघुक्षति । बुभूषति । रुरुदिषति । विविदिषति । मुमुषिषति । सुषुप्सति । पिपृच्छिषति ॥

**नामिनोऽनिट् ॥ ४ । ३ । ३३ ॥**

धातोः सन् किद्वत् ॥

**स्वरहन्गमोः सनि धुटि ॥ ४ । १ । १०४ ॥**

धातोर्दीर्घः ॥ चिचीषति । चिकीषति । चिकीर्षति । जिघांसति । धुटीति किम् ? चिचयिषति ॥

**सनीङश्च ॥ ४ । ४ । २५ ॥**

इणिकोरज्ञानार्थयोर्गमुः ॥

**प्राग्वत् ॥ ३ । ३ । ७४ ॥**

सन् पूर्वो यो धातुस्तस्मादिव सन्नन्तात् कर्त्तर्यात्मनेपदम् ॥ अधिजिगांसते स्त्रियम् । जिगमिषति ग्रामम् । मातुरधिजिगमिषति । निशयिषते । अश्वेन सञ्चिचरिषते । ज्ञाने तु प्रतीषिषति ॥

**वौ व्यञ्जनादेः सन् चायवः ॥ ४ । ३ । २५ ॥**

उपान्त्ये धातोः क्त्वा सेटौ किद्वा ॥ दिद्युतिषते । दिद्योतिषते । लिलिखिषति । लिलेखिषति । अय्व इति किम् ? दिदेविषति । विभित्सति । विवृत्सति विवर्तिषते । चिकृत्सति । चिकर्तिषति । चिचृत्सति चिचर्तिषति । निनृत्सति निनर्तिषति ॥

**इवृधभ्रस्जदम्भश्रियूर्णुभरज्ञपिसनितनिपतिवृद्दरिद्रः सनः ॥ ४ । ४ । ४७ ॥**

धातोरादिरिड् वा ॥ दुद्यूषति । दिदेविषति । सिस्यूषति ।

सिसेविषति। णिस्तोरेवेति वक्ष्यमाणनियमान्न षः॥

## ऋध ईर्त्॥ ४।१।१७॥

सादौ सनि न चास्य द्विः॥ ईर्त्सति। सीत्येव। अर्दिधिषति। विभर्क्षति। विभर्जिषति। विभ्रक्षति। विभ्रज्जिषति॥

## दम्भो धिप्धीप्॥ ४।१।१८॥

सि सनि न चास्य द्वि॥ धिप्सति। धीप्सति। सीत्येव। दिदम्भिषति। शिश्रीषति। शिश्रयिषति। युयूषति। यियविषति। प्रोर्णुनूषति। प्रोर्णुनविषति। प्रोर्णुनुविषति। बुभूर्षति। रिभरिषति॥

## ज्ञप्यापो ज्ञीपीप् न च द्वि. सि सनि॥ ४।१।१९॥

एकस्वरोऽग्रः॥ ज्ञीप्सति। ईप्सति। सीति किम्? जिज्ञपयिषति। कृतह्रस्वनिर्देशात् जिज्ञापयिषति॥

## सनि॥ ४।२।६१॥

खनिसनिजनो धुडादौ आः॥ सिषासति। धुटीत्येव। सिसनिषति॥

## तनो वा॥ ४।१।१०५॥

धुडादौ सनि दीर्घ॥ तितांसति। तितंसति। धुटीत्येव। तितनिषति॥

## रभलभशकपतपदामि॥ ४।१।२१॥

स्वरस्य सि सनि न च द्वि॥ आरिप्सते। लिप्सते। शिक्षति। पित्सति। पित्सते। सीत्येव। पिपतिषति। प्रावुवूर्षति। प्राविवरिषति। प्राविवरीषति। वुवूर्षते। विवरिषते। विवरीषते। तितीर्षति। तितरीषति। तितरिषति। दिदरिद्रासति। दिदरिद्रिषति॥

ऋस्मिपूङ्ज्यशौकृगृदृधृप्रच्छः ॥ ४ । ४ । ४८ ॥

सन आदिरिट् ॥ अरिरिषति । सिस्मयिषते । पिपविषते । अञ्जिजिषति । अशिशिषते । चिकरिषति । चिकरीषति । जिगरिषति । जिगरीषति । आदिदरिषते । आदिधरिषते । पिपृच्छिषति । पूङ्साहचर्यात् कृगृ इत्येते तौदादिका ग्राह्याः, तेन कृणातेश्चिकीर्षति । चिकरिषति । चिकरीषति । गृणाते, जिगीर्षति । जिगरिषति । जिगरीषति । परेनेर्दीर्घत्वमित्यपरे भवति ॥

मिमीमादामित्स्वरस्य ॥ ४ । १ । २० ॥

सि सनि न च द्वि ॥ मित्सति मित्सते शतम् । मित्सते । प्रमित्सति प्रमित्सते शत्रून् । मित्सति । प्रमित्सते भूमिम् । अपमित्सते यवान् । मातेर्नेच्छन्त्येके । प्रदित्सति दानम् । दित्सति पुत्रम् । दित्सति दित्सते वस्त्रम् । दित्सति दण्डम् । धित्सति स्तनम् । धित्सति धित्सते शूलम् । बहुवचनस्य व्याप्त्यर्थत्वान्निरनुबन्धग्रहणे न सानुबन्धस्येत्यादि नाश्रीयते ॥

अव्याप्यस्य मुचेर्मोग्वा ॥ ४ । १ । १९ ॥

सि सनि न चास्य द्वि ॥ मोक्षति । मुमुक्षति चैत्रः । अव्याप्यस्येति किम् ? मुमुक्षति वत्सम् ॥

राधेर्वधे ॥ ४ । १ । २२ ॥

सि सनि स्वरस्य इ न च द्वि ॥ प्रतिरित्सति । वध इति किम्? आरिरात्सति ॥

दीङः सनि वा ॥ ४ । २ । ६ ॥

आत् ॥ दिदासते दिदीषते । तितृक्षति । तितर्हिषति । जिगीषति । पिपिषिषति । नित्यमपि द्विर्वचनमुपान्त्यगुणेन बाध्यते ।

ओणेर्ऋदित्करणस्य सामान्यापेक्षज्ञापकत्वात्। प्राणिणिषति। ऊर्णुनुविषति। उच्चैः च च्छाभ्या सहितस्यैव द्वित्वम्। निमित्ताभावे नैमित्तिकस्याप्यभाव इति तनित्यम्। नुनूषति। शुशावयिषति। शिश्वाययिषति। जुहावयिषति। पुस्फारयिषति। पुस्फोरयिषति पिस्फारयिषति। चिक्लावयिषति। आर्जान्तेति इत्वम्। सुश्रु इत्यादिना वेत्वम्। शिश्रावयिषति। शुश्रावयिषति॥

## णिस्तोरेवाऽस्वदस्विदसह षणि॥ २। ३। ३७॥

सो नाम्यादेः परस्य षः स्यात्॥ सिषेवयिषति। तुष्टूषति। स्वदादिवर्जनं किम्? । सिस्वादयिषति। सिस्वेदयिषति। सिसाहयिषति। एवेति किम्? सुसूषति। एवकारो विपरीतनियमनिवृत्त्यर्थः। तेन असीषिवत्। तुष्टाव। षणीति किम्? सिषेव। पत्व किम्? तिष्ठासति। सुषुप्सति। कथमधीषिषति प्रतीषिषति, धातोरेव पत्वनियमस्योक्तत्वात् इह तु सनो द्वित्वकृतत्वान्नियमो न प्राप्नोति। उपसर्गात्सुग् इत्यादिसूत्रे अद्वित्व इत्युक्तेरिह न षत्वम्। अभिसुसूषति॥

## सञ्जेर्वा॥ २। ३। ३८॥

नाम्यादेः परस्य सः षणि षः स्यात्॥ सिषञ्जयिषति। सिसञ्जयिषति॥

## स्वपो णावुः॥ ४। १। ६२॥

द्वित्वे पूर्वस्य॥ सुष्वापयिषति। णाविति किम्? सिष्वापकीयिषति। स्वपो णाविति किम्? स्वाप चिकीर्षति सिष्वापयिषति। स्वपो णौ सति द्वित्व इति किम्? सोषोपयिषति॥

॥ इति सन्नन्तप्रक्रिया॥

व्यञ्जनादेरेकस्वराद् भृशाभीक्ष्ण्ये यङ् वा ॥३।४।९॥

धातोः ॥ गुणक्रियाणामधिकप्रकर्षादीनां क्रियान्तरव्यवधानेन साकल्येन सम्पत्तिः फलातिरेको वा भृशत्वं, प्रधानक्रियाया निरन्तरत्वे क्रियान्तरव्यवधानेनाऽऽवृत्तिराभीक्ष्ण्यम् ॥

आगुणावन्यादेः ॥ ४ । १ । ४८ ॥

यङन्तस्य द्वित्वे पूर्वस्य ॥ भृशं पुनः पुनर्वा पचतीति पापच्यते । बोभूयते । लोलूयते । अन्यादेरिति किम् ? वनीवच्यते । सनीस्रस्यते । यायज्यते । पूर्वसूत्रे व्यञ्जनादेरिति किम् ? अटाट्यते । एकस्वरादिति किम् ? भृशं जागर्ति । धोरिति किम् ? सुनीहि सुनीहीत्येवायं सुनातीत्यादि यथा स्यात् ॥

योऽशिति ॥ ४ । ३ । ८० ॥

धातोर्व्यञ्जनात् परस्य प्रत्यये यङ् ॥ अपापचिष्ट । पापचाञ्चक्रे । लोलूयते ॥

अटयर्तिसूत्रिमूत्रिसूच्यशूर्णोः ॥ ३ । ४ । १० ॥

भृशाभीक्ष्ण्ये यङ् ॥ अटाट्यते । अरार्यते । सोसूत्र्यते । मोमूत्र्यते । सोसूच्यते । अशाश्यते । प्रोर्णोनूयते ॥

गत्यर्थात् कुटिले ॥ ३ । ४ । ११ ॥

गॄलुपसदचरजपजभदशदहो गर्ह्ये ॥ ३ । ४ । १२ ॥

एव यङ् ।

ग्रो यङि ॥ २ । ३ । १०१ ॥

रो लृ ॥ निजेगिल्यते । लोलुप्यते । सासद्यते ॥

चरफलाम् ॥ ४ । १ । ५३ ॥

यङन्तानां द्वित्वे पूर्वस्य मुरन्तः ॥

ति चोपान्त्यातोऽनोदुः ॥ ४ । १ । ५४ ॥

यङन्तानां चरफलां प्रत्यये ॥ चञ्चूर्यते । पम्फुल्यते । अत इति किम् ? चञ्चार्यते । पम्फाल्यते । अनोदिति किम् ? चञ्चूर्ति । पम्फुलित ॥

जपजभदहदशभञ्जपशः ॥ ४ । १ । ५२ ॥

यङन्तस्य द्वित्वे पूर्वस्य मुरन्त ॥ जञ्जप्यते २ । जञ्जभ्यते २। दन्दह्यते । दन्दश्यते । बम्भज्यते । पम्पश्यते ॥

ऋमतां रीः ॥ ४ । १ । ५५ ॥

यङन्तानां द्वित्वे पूर्वस्यान्तः ॥

नृतेर्यङि ॥ २ । ३ । ९५ ॥

नो ण् न स्यात् ॥ नरीनृत्यते । यङीति किम् ? हरिणर्त्ती नाम कश्चित् । परीपृच्छ्यते । जरीगृह्यते । चल्रीक्लृप्यते । वरीवृश्च्यते । बहुवचननिर्देशो लाक्षणिकपरिग्रहार्थः ॥

ईर्व्यञ्जनेऽयपि ॥ ४ । ३ । ९७ ॥

गापास्थासादामाहाकः क्ङित्यशिति ॥ जेगीयते । पेपीयते । इत्यादि ॥

घ्राध्मोर्यङि ॥ ४ । ३ । ९८ ॥

ई ॥ जेघ्रीयते । देध्मीयते ॥

हनो घ्नीर्वधे ॥ ४ । ३ । ९९ ॥

यङि ॥ जेघ्नीयते । वध इति किम् ? गतौ जङ्घन्यते ॥

क्ङिति यि शय् ॥ ४ । ३ । १०५ ॥

शीङः ॥ शाशय्यते । क्ङितीति किम् ? शेयम् ॥

ऋतो री ॥ ४ । ३ । १०९ ॥

क्ङियङ्यक्षु ऋदन्तस्य ऋतो री ॥ चेक्रीयते । सस्रीयते । ऋत इति किम् ? चेकीर्यते । क्यङ्यङोनि गुणे सति द्वित्वे सास्मर्यते । शोशूयते । शेश्वीयते । पेपीयते । सोषुप्यते ।

व्येस्यमो यङि ॥ ४ । १ । ८५ ॥

सस्वरान्तस्था य्वृत् ॥ वेवीयते । सेसिम्यते ॥

चाय की ॥ ४ । १ । ८६ ॥

यङि ॥ चेकीयते । दीर्घनिर्देशो यङ्लुबर्थः । चेकीत । चाचय्यते ॥

वञ्चस्रंसध्वंसभ्रंसकसपतपदस्कन्दोऽन्तो नी ॥४।१।५०॥

यङन्तस्य द्वित्वे पूर्वस्य ॥ वनीवञ्च्यते । सनीस्रस्यते । दनीध्वस्यते । इत्यादि ॥

सिचो यङि ॥ २ । ३ । ६० ॥

स ष् न स्यात् ॥ सेसिच्यते ॥

न कवतेर्यङः ॥ ४ । १ ४७ ॥

द्वित्वे सति पूर्वस्य कश्चः ॥ कोकूयते खरः । कवतेरिति किम्? । कौतिकुवत्योर्माभूत् । चोकूयते । यङ इति किम् ? चुकुवे ॥

## न गृणाशुभरुचः ॥ ३ । ४ । १३ ॥

यङ् ॥ निन्द्य गृणाति । भृशं शोभते । भृशं रोचते। इति यङन्तप्रक्रिया ॥

## बहुलं लुप् ॥ ३ । ४ । १४ ॥

यङ. ॥ यङ्लुप् चेत्युक्ते यङ्लुबन्तानामदादित्वम्। ङित्त इत्यनुबन्धनिर्देशाद्यङ्लुबन्तादात्मनेपदं न । यङ्लुरुस्तोरीति वेदागमे बोभवीति । बोभोति । बोभूतः । बोभुवति । बोभूयात् । बोभोतु । बोभवीतु। बोभूहि। अबोभवीत् । अबोभोत्। अबोभूताम् । अबोभवुः। पिबैतिदाति सिज्लुपि । अबोभोत् । अबोभूवीत् । अबोभोताम् । अबोभूवन् । अबोभूवुः इति केचित् । बोभवाञ्चकार । बोभूयात् । बोभविता । बहुलवचनात् क्वचिन्न । लोलूया । पोपूया । तथा चाह “ क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥ ” इति, नानात्ति । नानाधीति । नानात्त । पास्पर्द्धीति । पास्पर्धि। पास्पर्द्धः । पास्पर्द्धति । पास्पर्त्सि । हेर्धिः । पास्पर्धि । अपास्पर्त् । अपास्पर्द् । सिपि । अपास्पाः इत्यपि । जाघाद्धि । जाघाधीति । जाघात्सि । अजाघात् । अजाघः । दादधीति । दादद्धि । दादद्धः । दाधत्सि । अदाधत् । अदादधीत् । अदादाधीत् । अदादधीत् । चोस्कुन्दीति । चोस्कुन्ति । अचोस्कुन् । मोमुदीति। मोमोत्ति। अमोमुदीत्। अमोमोत् । अमोमुदी । अमोमो । अमोमोत् । अमोमोदीत्। चोकूर्दीति। चोकूर्त्ति । अचोकूर्दीत् । अचोकूर्त् । सिपि । अचोकूर्त्। अचोकूः । वनीवञ्चीति । वनीवङ्क्ति । वनीवक्तः । वनीवचति । अवनीवञ्चीत् । अवनीवन् । जङ्घमीति । जङ्घन्ति । जङ्घतः । जङ्घनति । जङ्घन्मि । जङ्घन्व । जङ्घहि । एकस्वरग्रहणान्नेह इड्निषेधः । अजङ्घमीत्। जङ्घ-

नीति । जङ्घन्ति । जङ्घत । जङ्घ्नति । जङ्घहि । अजङ्घनीत् । अवधीत् । वध्यात् । अत्र सकृत्प्रवृत्तत्वाद्वधादेशस्य द्वित्वत्र । आङ्पूर्वस्य तु । आजङ्घत इत्यादि । चङ्घनीति ॥

## आ खनिसनिजन. ॥ ४ । २ । ६० ॥

धुडादौ क्ङिति ॥ चङ्खातः । चङ्खनीति । चञ्चूर्त्ति । चञ्चुरीति । अचञ्चुरीत् । अचञ्चूः । योयवीति । योयोति । अयोयोत् । अयोयवीत् । अयोयावीत् ॥

## न हाको लुपि ॥ ४ । १ । ४९ ॥

द्वित्वे पूर्वस्य यङ आ न स्यात् ॥ जहाति । जहेति । जाहातीत्यन्ये । जहीतः । अनेरादिकस्य, तिवा शवेति निषेधात् । जहति । जहीहि । अजहेत् । अजहात् । अजहीताम् । अजहासीत् । जहायात् । अजहिष्यत् । सोपुपीति । सोपोप्ति । अन्यमते तु सास्वपीति । सास्वप्ति । सास्वप्त । सासुप्यात् । असास्वपीत् । असास्वप् । असास्वपीत् । असास्वापीत् ॥

## रिरौ च लुपि ॥ ४ । १ । ५६ ॥

ऋमतो यङो द्वित्वे पूर्वस्य रीरन्तः ॥ चरिकर्त्ति । चर्कर्ति । चरीकर्ति । चरिकरीति । चर्करीति । चरीकरीति । चरिकृतः । चर्कृत । चरीकृत । चरिक्रति । चर्क्रति । चरीक्रति । चर्कर्षि । बहुलग्रहणान्नेत् । अचर्करीत् । अचरिकरीत् । अचरीकरीत् । अचर्कः । ३ । अचर्कारीत् ३ । चर्करामास ३ । चक्रियात् ३ । चर्करिता ३ । चर्करिष्यति ३ । वर्वर्त्ति ३ । अत्र बहुलग्रहणान्नेत् । अवर्वृतीत् ३ । अवारिवर्त् । ३ । अवर्वा ३ गणनिर्दिष्टत्वादड्न । अवर्वर्तीत् । एवं नर्नृतीति ३ । जर्गृधीति ३ । जर्गर्धि ३ । अजर्घर्त् ३ । अजरिगृ-

द्राम् । अजर्या । जर्गृहीति ३ । जर्गर्ढि ३ । जरिगृढे । जरिगृहाति । जरिगृहीपि । जरिघर्क्षि । अजर्घट् । तिवि शब्बेत्यस्यानित्यत्वाद् गश्च-तुर्थं । जरिगर्हिता । परिपृच्छीति । परिपाष्टि । परिपृष्टः । परिपृच्छति । परिपृश्वः । अत्र यद्वनिमित्तो ग्वत् । लुप्यग्वल्लेनदित्यत्र ग्वद्वर्जनान्न स्थानिवद्भावनिषेधः । मरीमृजीति ३ । मरिमार्ष्टि ३ । मरीमृजन्ति । मरीमार्जन्ति । अरर्ति । अरियर्ति । अररीति । अरियरीति । अर्ऋत । अरियृत । आराति । अरियृति । अर्ऋयात् । अरियृयात् । अरर्तु । अरियर्तु । अररीतु । अरियरीतु । अर्ऋतात् । अरियृतात् । अरतु । अरियृतु । आर । आरिय । आररीत् । आरियरीत् । आर्ऋताम् । आरियृताम् । आररुः । आरियरुः । आर । आरिय । आररी । आरियरी । आरारीत् । आरियारीत् । अरराचकार । अरियाचकार । आरियात् । अरियृयात् । अरारिता । अरियरिता । आगरिष्यत् । आरियरिष्यत् । ऋमतामित्यत्र ह्रस्वस्यैव ग्रहणादिह न । तातरीति । तातर्ति । तातीर्तः । तातिरति । तातीर्हि । तातराणि । अतातरीत् । अतातः । अताता-रीत् । एवं चाकरीति । जरिगृहीति ३ । जरिगर्ढि ३ । जरिगर्हिता । इटो दीर्घस्तु न । तत्र लुप्ततिनिर्देशात् । जाहयीति । जाहति । जाहत । जाहयति । जाहामि । जाहयीति । जाहर्ति । जाहर्त्तः । जाहयंति । जाहर्हि । अजाह । अजाहत्ताम् । अजाहयुः ॥

## मव्यविश्रिविज्वरित्वरेरुपान्त्येन ॥ ४ । १ । १०९ ॥

अनुनासिकादौ क्वौ धुडादौ च प्रत्यये वस्योट् ॥ मामवीति । मामोति । मामूतः । मामवति । मामावः । मामूम । मामोतु । मामूतात् । मामूहि । मामवानि । अमामवीत् । अमामोत् । शेश्रिवीति । शेश्रोति । जाजूर्ति । जाजूर्त्तः । तातूर्ति । तातूर्त्तः । मव्य बन्धने ।

अनुनासिके चेत्युटि । मामेति । मामनीति । तेतनीति । तेतयीति । देदिवीति । देद्योति । सेसिवीति । सेस्योति । अन्ये तु क्वित्येवोट-मिच्छन्तो देदेति सेषेतीत्येवमिच्छन्ति । केचित्तु यकारवकारान्ताना-मूड्भाविनां यङ्लुपोऽभावमिच्छन्ति ।

राल्लुक् ॥ ४ । १ । ११० ॥

परयोर्व्योरनुनासिकादौ क्वौ धुडादौ च प्रत्यये ॥ मोमोर्त्ति । मोमूर्त्तः । मोमूर्च्छति । जोढोर्त्ति । तोतूर्वीति । तोतोर्त्ति । तोतूर्वति तोधोर्त्ति । दोदोर्त्ति । दोधोर्त्ति । वेवेति । वेवयीति । अत्र यङ्लु-प्यपि तद्विषयोऽस्त्येव यथाऽवात्तामित्यत्र सिच । यङ्लुप्यपि तद्विषया-भावेन दीर्घाभावान्त्यामहेतरजेर्यङ्लुङ् नास्तीति केचित् । चोकवीति । चोकोति । वेवयीति । वेवेति । सेसिमीति । सेसिन्ति । शोशवीति । शेश्वयीति । आपपेति । चेक्यीति । चेकेति ॥

॥ इति यङ्लुबन्तप्रक्रिया ॥

---

द्वितीयाया काम्य ॥ ३ । ४ । २२ ॥

नाम्न इच्छायां वा ॥ पुत्रकाम्यति । इदंकाम्यति । यशस्का-म्यति । किंकाम्यति । स्वःकाम्यति । उच्चैःकाम्यति । काम्येनैव कर्मण उक्तत्वात् कर्मणि नास्य प्रयोगः । द्वितीयाया इति किम् ? इष्टः पुत्रः । भ्रातुष्पुत्रमिच्छतीत्यादौ तु न, सापेक्षत्वात् । आत्मीय-ताया गम्यमानाया तु भ्रातुः पुत्रकाम्यतीति भवत्येव ॥

अमाव्ययात्क्यन् च ॥ ३ । ४ । २३ ॥

द्वितीयान्तान्नाम्न इच्छायां काम्यो वा ॥

क्यनि ॥ ४ । ३ । ११२ ॥

अवर्णान्तस्य ई ॥ पुत्रीयति । पुत्रकाम्यति । मालीयति । अमाव्ययादिति किम् ? किमिच्छति । उच्चैरिच्छति । इदमिच्छति । स्वरिच्छति ॥

## नं क्ये ॥ १ । १ । २२ ॥

नाम पदम् ॥ क्य इति क्यन्–क्यङ्–क्यङ्षां ग्रहणम् । राजीयति । अहर्यति । गव्यति । नाव्यति । सन्निपातपरिभाषया यस्य लोपो न । गव्यिता । वाव्यति॥

## क्यो वा ॥ ४ । ३ । ८१ ॥

धातोर्व्यञ्जनात् परस्याशिति लुक्॥ वाचिता। वाच्यिता। समिध्यति । अदस्यति । त्वयति । मयति । प्रकृत्यर्थस्यैकत्वाभावे तु युष्मयति । अस्मयति । गीर्यति । पूर्यति । अभ्वादिरत्राघ दीर्घः, दिव्यति । गार्गीयति । कत्रीयति । पित्रीयति । कत्रीयति ॥

## आधाराच्चोपमानादाचारे ॥ ३ । ४ । २४ ॥

मन्ताव्ययवर्जान्नाम्न' क्यन् वा ॥ पुत्रीयति छात्रम् । मासादीयति कुट्याम् । न मादिरप्रत्ययः, मासादीयत् ॥

## क्षुत्तृड्गर्द्धेऽशनायोदन्यधनायम् ॥ ४ । ३ ।११३॥

निपात्यते ॥ अशनायति । उदन्यति । धनायति । क्षुदादाविति किम् ? अशनीयति । उदकीयति । धनीयति दानाय ॥

## वृषाश्वान् मैथुने स्सोऽन्त. ॥ ४ । ३ ।११४॥

क्यनि ॥ वृषस्यति गौ । अश्वस्यति वडवा । मैथुन इति किम् ? वृषीयति । अश्वीयति । स्स इति द्विसकारनिर्देश पत्वनिषेधार्थः, तेनोत्तरत्र दधिस्यति । मधुस्यति ।

## अस् च लौल्ये ॥ ४ । ३ । ११५ ॥

गन्ये पाति नाम्नः समोऽन्त ॥ दृशिम्याति । दध्यम्पति । मधुस्यति । मधुस्याति । अन्य इति किम् ? क्षीरितिमि वाधुम् ॥

## कर्तु क्यिप् गल्भक्लीवहोडात्तु ङित् ॥ ३ । ४ ।२५॥

उपमानाप्नाम्न आचारे वा ॥ अश्वाति । दधपाति । राजाति । गराति । राजनाति । पयेनति । इदमति । अघोपान्त्यस्य दीर्घ इत्यन्ये । अइवाघाति । अति । अ । अनु । उ । स्वाति । सस्व । सन्त्राविरयन्ये । माजाति । अमात्मासीत् । पयपति । पयति । श्रयति । पितरति । भरति । श्रुसुरेणति । घनति । कति । मदनाति । अनडोहति । गेरति । पौरति । गल्भते । क्लीबते । होडते ॥

## क्यङ् ॥ ३ । ४ । २६ ॥

कर्तुरुपमानादाचारे वा ॥ हंसायते ध्वाक्षः । पण्डितायते मूर्खः । पतायते । गार्गायते । वात्स्यायते । युवायते । तरुणायते । पाचिकायते । पञ्चमीयते । माहेश्वरीयते । चान्द्रमसीयते । ब्राह्मणीयते । राजनीयते । कायते । शापाय्यते ॥

## सो वा लुक् च ॥ ३ । ४ । २७ ॥

सन्तात् कर्तुरुपमानादाचारेऽर्थे क्यङ् वा स्यादन्त्यस्य ॥ पयायत । पयस्यते नीरम् ॥

## ओजोऽप्सरस ॥ ३ । ४ । २८ ॥

कर्तुरुपमानादाचारे क्यङ वा सस्य लुक् ॥ ओजायते । अप्सरायते । अन्ये तोजःशब्दे सलोपमिच्छन्ति ॥

## च्व्यर्थे भृशादे स्तो ॥ ३ । ४ । २९ ॥

कर्तुः क्यङ् वा यथासम्भव लुक् च ॥ अभृशो भृशो भवति भृशायते । उन्मनायते । न मान्त्विप्रत्ययः । उदमनायत ।

सुमनायते। स्वमनायत। अमत्यय इत्युक्ते औत्सुकायत। पेहायते। कर्तुरित्येव। अभृश भृश करोति। च्व्यर्थ इति किम् ? भृशो भवति॥

## डाज्लोहितादिभ्यः षित् ॥ ३ । ४ । ३० ॥

कर्तृभ्यश्च्व्यर्थे क्यङ् ॥

## क्यङ्षो न वा ॥ ३ । ३ । ४३ ॥

धातो कर्तर्यात्मनेपदम् ॥ पटपटायति। पटपटायते। लोहितायति। लोहितायते। कर्तुरित्येव। अपटत् पटत् करोति। च्व्यर्थ इत्येव। लोहितो भवति। बहुवचनमाकृतिगणार्थम्। धूमादीनां स्वतन्त्रार्थवृत्तीनां प्रकृतिविकारभावप्रतीतेश्च्व्यर्थो नास्तीति तद्वद्वृत्तिभ्य प्रत्ययः। अधूमवान् धूमवान् भवति धूमायति। धूमायते॥

## कष्टकक्षकृच्छ्रसत्रगहनाय पापे क्रमणे ॥३।४।३१॥

एभ्यश्चतुर्थ्यन्तेभ्यः पापवृत्तिभ्य क्रमणेऽर्थे क्यङ्॥ कष्टायते। कक्षायते। कृच्छ्रायते। सत्रायते। गहनायते। चतुर्थीनिर्देश किम् ? रिपुः कष्ट क्रामति। पाप इति किम् ? कष्टाय तपसे क्रामति॥

## रोमन्थाद् व्याप्यादुच्चर्वणे ॥ ३ । ४ । ३२ ॥

क्यङ् वा ॥ रोमन्थायते गौः। उच्चर्वण इति किम् ? कीटो रोमन्थ वर्तयति॥

## फेनोष्मबाष्पधूमादुद्वमने ॥ ३ । ४ । ३३ ॥

क्यङ् वा॥ फेनायते। ऊष्मायते। बाष्पायते। धूमायते॥

## सुखादेरनुभवे । ३ । ४ । ३४ ॥

कर्मण क्यङ् वा॥ सुखायते। दुःखायते॥

## शब्दादेः कृतौ वा ॥ ३ । ४ । ३५ ॥

कर्मण क्यङ ॥ शब्दायते। वैरायते। कलहायते। पक्षे णिच्। शब्दयति।

तपसः क्यन् ॥ ३ । ४ । ३६ ॥
कर्मणः कृतौ वा ॥ तपस्यति ॥

नमोवरिवश्चित्रङोऽर्चासेवाश्चर्ये ॥ ३ । ४ । ३७ ॥
कर्मणः क्यन् वा ॥ नमस्यति देवान् । वरिवस्यति । चित्रीयते ॥

अङ्गान्निरसने णिङ् ॥ ३ । ४ । ३८ ॥
कर्मणो वा ॥ हस्तयते । पादयते । कर्मण इति किम् ? हस्तेन निरस्यति । निरसन इति किम् ? हस्तं करोति हस्तयति ॥

पुच्छादुत्परिव्यसने ॥ ३ । ४ । ३९ ॥
पुच्छात्कर्मण उदसने पर्यसने व्यसनेऽसने चार्थे णिङ् वा ॥ उत्पुच्छयते । परिपुच्छयते । विपुच्छयते । पुच्छयते ॥

भाण्डात्समाचितौ ॥ ३ । ४ । ४० ॥
कर्मणो णिङ् वा ॥ सम्भाण्डयते । परिभाण्डयते ॥

चीवरात्परिधानार्जने ॥ ३ । ४ । ४१ ॥
कर्मणो णिङ् वा ॥ परिचीवरयते । सचीवरयते ॥

णिज् बहुलं नाम्नः कृगादिषु ॥ ३ । ४ । ४२ ॥
बहुलग्रहणं प्रयोगानुसरणार्थम् ॥ तेन यस्मान्नाम्नो यद्विभक्त्यन्तात्यस्मिन् धात्वर्थे दृश्यते तस्मात्तद्विभक्त्यन्तात्तदर्थ एव भवतीति नियमो लभ्यते । मुण्डङ्करोति मुण्डयतिच्छात्रम् । पटुमाचष्टे पटयति। वृक्षं रोपयति वृक्षयति । कृतं गृह्णाति कृतयति । रूपं निध्यायति निरूपयति । लोमान्यनुमार्ष्टि अनुलोमयति । हस्तिनाऽतिक्रामति अतिहस्तयति । वर्मणा सन्नह्यति संवर्मयति । वीणयोपगायति उपवीणयति। सेनयाभियाति अभिषेणयति। वास्याच्छिनत्ति वासयति। वाससोन्मोचयति उद्वासयति । श्लोकैरुपस्तौति उपश्लोकयति। हस्ते-

विपाशयति । शूरो भवति शूरयति । वीर उत्सहते वीरयति । पुत्र सूते पुत्रयति । स्रग्विणमाचष्टे स्रजयति । पयस्विनीं पयसयति । पययतीत्यप्येके । त्वग्वन्तं त्वचयति । अल्प युवानं वा कनयति । पक्षे अल्पयति । यवयति । स्थवयति । दवयति । ह्रसयति । क्षेपयति । क्षोदयति । श्रयति । ज्ययति । साधयति । नेदयति । मापयति । स्थापयति । स्फापयति । वरयति । गम्यति । बहयति । त्रपयति । द्राघयति । वर्षयति । वृन्दयति । प्रथयति । म्रदयति । भ्रसयति । क्रशयति । द्रढयति । परिव्रढयति । भूययति । ऊढिमाचष्टे ऊढयति । औजिढत् । केचित्तु औडिढत् इतीच्छन्ति । ऊढमाख्यत् औजढत् । स्वयति । त्वां मा वाऽऽचष्टे त्वदयति मदयति । त्वादयति मादयती न्यन्ये । त्वापयति मापयतीत्यपरे । युवामावां वा आचष्टे युष्मयति अस्मयति । विद्वांसं विद्वयति । विद्वावयतीत्यन्ये । विदयतीत्यपरे । श्वानं श्वानयति । शावयतीत्यन्ये । शुनयतीत्यपरे । उदश्वमाचष्टे उदयति । उदीचयतीत्यन्ये । मत्यञ्च मत्ययति । दध्यञ्च दध्ययति । हर्म्यं कर्लि वा गृह्णाति हलयति कलयति । अजहलत् । स्रुवमाचष्टे भावयति । अबीभवत् । भ्रुवं भावयति अबुभ्रवत् । श्रियम् अशिश्रयत् । गाम् अजुगवत् । रायम् अरीरयत् । नावम् अनूनवत् । कर्त्तारमाचष्टे, करयति । दरद् दारदयति । एनीम् एतयति । ऐततत् ॥

व्रतादभुजितन्निवृत्त्यो । ३ । ४ । ४३ ॥

कृगादिष्वर्थेषु णिज्बहुलम् ॥ व्रत शास्त्रविहितो नियमः । पयो व्रतयति । सावद्यान्न व्रतयति ॥

सत्यार्थवेदस्या. ॥ ३ । ४ । ४४ ॥

णिच्सन्नियोगे ॥ सत्यापयति । अर्थापयति । वेदापयति ॥

श्वेताश्वाश्वतरगालोडिताह्वरकस्याश्वतरेतकलुक्
॥ ३ । ४ । ४५ ॥

णिचूसंनियोगे ॥ श्वेतयति । अश्वयति । गालोडयति । आह्वरयति ॥

## इति नामधातुप्रक्रिया ॥

---

### धातोः कण्ड्वादेर्यक् ॥ ३ । ४ । ८ ॥

स्वार्थे ॥ द्विविधा कण्ड्वादयः धातवो नामानि च । कण्डूञ् गात्रविघर्षणे । १ ॥ कण्डूयति । कण्डूयते । धातोरिति किम् ? कण्डूः । महीङ् वृद्धौ पूजायाञ्च । २ ॥ महीयते । हृणीङ् रोषलज्जयोः । ३ ॥ हृणीयते । वेट् लाट् धौर्त्ये पूर्वभावेस्वप्ने च । ४ ॥ मन्तु रोषवैमनस्ययोः । ५ ॥ अपराध इत्येके । मन्तूयति । वल्गु माधुर्यपूजयोः । ६ ॥ असु मानसोपतापे । ७ ॥ असू असूञ् इत्येके । अन्ये तु असूङ् दोषाविष्कृतौ रोगे चेत्याहुः । वेट् लाट् वेड्वत् । ८ ॥ ग्लाट् जीवन इत्येके । वेट्लाट् इत्यन्ये । लिट् अल्पार्थे कुत्सायां च । ९ ॥ लोट् दीप्तौ । १० ॥ लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने चेत्येके । ऐला दीप्तावित्यपि केचित् । उरस् ऐश्वर्ये । ११ ॥ उषस् प्रभातीभावे । १२ ॥ इरस् ईर्ष्यायाम् । १३ ॥ इरज् इरञ् इत्यपि केचित् । तिरस् अन्तर्द्धौ । १४ ॥ इयस् इमस् अस् पयस् प्रसृतौ । १५ ॥ संभूयस् प्रभूतभावे । १६ ॥ दुवस् परितापपरिचरणयोः । १७ ॥ दुरज् भिषज् चिकित्सायाम् । १८ ॥ भिष्णुक् उपसेवायाम् । १९ ॥ रेखा श्लाघासादनयोः । २० ॥ लेखा विलासस्खलनयोः । २१ ॥ अदन्तोऽयमित्यपरे ॥ एला केला वेला खेला विलासे । २२ ॥ इलेत्यन्ये । खल इत्येके । गोधा मेधा आशुग्रहणे । २३ ॥ मगध परिवेष्टने । २४ ॥ नीचदास्य इत्यन्ये ॥ इषुध इषुध शरधारणे । २५ ॥ कृपुभ् क्षेपे । २६ ॥ सुख दुःख तत्क्रियायाम् । २७ ॥ अगद नीरोगत्वे । २८ ॥ गद्गद वाक्स्खलने । २९ ॥ गद्गदाद्दित्येके । तरण वरण गतौ । ३० ॥ उरण तुरण त्वरायाम् । ३१ ॥ पुरण गतौ । ३२ ॥ भुरण धारणपोषणयुद्धेषु । ३३ ॥ चुरण मतिचौर्ययोः । ३४ ॥ भरण भर्त्सिद्धार्थे । ३५ ॥ नपुंस तम्पस दुःखार्थे । ३६ ॥ तन्तस पम्पस इत्य-

न्यत्र ॥ अरर आराकर्मणि । ३७ ॥ सपर पूजायाम् ।३८॥ समर युद्धे । ३९ ॥

॥ इति कण्ड्वादयः ॥

नाम्नो द्वितीयाद्यथेष्टम् ॥ ४ । १ । ७ ॥

स्वरादेर्नामधातोर्द्वित्वभाजो द्वितीयादारभ्यैकस्वरांशो यथेष्टं द्विः। अश्विस्वीयिषति । अश्वीयियिषति । अश्वीयिषिषति ॥

अन्यस्य ॥ ४ । १ । ८ ॥

स्वरादेरन्यस्य नामधातोर्द्वित्वभाज एकस्वरांशो यथेष्टं प्रथमादिर्द्विः ॥ पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । पुत्रीयिषिषति ॥

कण्ड्वादेस्तृतीय ॥ ४ । १ । ९ ॥

कण्ड्वादेर्द्वित्वभाज एकस्वरोंऽशस्तृतीय एव द्विः ॥ कण्डूयियिषति । असूयियिषति ॥

पुनरेकेषाम् ॥ ४ । १ । १० ॥

मते द्वित्वे कृते द्वित्वम् ॥ सुसोषुपिषते । एकेषामिति किम्? सोषुपिषते । सनन्ताण्णिगि सुषूपयति । यङन्ताण्णिगि । बोभूययति । यङ्लुबन्ताण्णिगि, बोभावयति । णिगन्ताण्णिगि । भावयति । ण्यन्तात्सनि बिभावयिषति । यङ् सन् ण्यन्तात् सन् । बोभूयिषयिषति । यङ् णिग् सनन्ताण्णिग् बोभूयिषयतीत्यादि ॥

॥ इति प्रत्ययमाला ॥

इङितः कर्त्तरि । एधते । आस्ते । शेते ॥

क्रियाव्यतिहारेऽगतिहिंसाशब्दार्थहसो ह्रवहश्चानन्योन्यार्थे ॥ ३ । ३ । २३ ॥

कर्त्तर्यात्मनेपदम् ॥ व्यतिलुनते। व्यतिघ्नते। व्यतिवहन्ते भारम्। क्रियेति किम्? द्रव्यव्यतिहारे मा भूत्। चैत्रस्य धान्यं व्यतिलुनन्ति। गत्यर्थादिवर्जनं किम्? व्यतिसर्पन्ति। व्यतिहिंसन्ति। व्यतिजल्पन्ति। व्यतिहसन्ति। अनन्योन्यार्थ इति किम्? परस्परस्य व्यतिलुनन्ति। कर्त्तर्येव। तेन भावकर्मणोः पूर्वेणैव गत्यर्थादिभ्योऽपि स्यात्। व्यतिगम्यन्ते ग्रामाः। असष् भुवि। व्यतिस्ते। व्यतिषाते। व्यतिषते। व्यतिसे। व्यतिध्वे। व्यतिहे। व्यतिषीत। व्यत्यसै। व्यत्यास्त। व्यतिराते २। व्यतिभाते २। व्यतिबभे ॥

## निविश ॥ ३ । ३ । २४ ॥

कर्त्तर्यात्मनेपदम् ॥ निविशते ॥

## उपसर्गादस्योहो वा ॥ ३ । ३ । २५ ॥

कर्त्तर्यात्मनेपदम् ॥ विपर्यस्यते। विपर्यस्यति। समूहते। समूहति ॥

## उपसर्गादूहो ह्रस्वः ॥ ४ । ३ । १०६ ॥

ञ्किति यादौ ॥ समुह्यते। समुह्यात्। उपसर्गादिति किम्? ऊह्यते। वीत्येव। समूहितम्। ऊ ऊह इति प्रश्लेषात्। आ ऊह्यते ओह्यते। समोह्यते ॥

## उत्स्वराद्युजेरयज्ञतत्पात्रे ॥ ३ । ३ । २६ ॥

उपसर्गात् कर्त्तर्यात्मनेपदम् ॥ उद्युङ्क्ते। उपयुङ्क्ते। उत्स्वरादिति किम्? संयुनक्ति। अयज्ञतत्पात्र इति किम्? द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति ॥

## परिव्यवात्क्रिय ॥ ३ । ३ । २७ ॥

उपसर्गात् कर्त्तर्यात्मनेपदम् ॥ परिक्रीणीते। विक्रीणीते। अवक्रीणीते। उपसर्गादित्येव। उपरि क्रीणाति ॥

## परावेर्जे ॥ ३ । ३ । २८ ॥

कर्त्तर्यात्मनेपदम् ॥ पराजयते। विजयते। उपसर्गादित्येव।

यद्भुवि जयति वनम् ॥

## समः क्ष्णोः ॥ ३ । ३ । २९ ॥

कर्त्तर्य्यात्मनेपदम् ॥ सक्ष्णुते शस्त्रम् । समइति किम् ? क्ष्णौति । उपसर्गादित्येव । आयम क्ष्णौति ॥

## अपाच्चतुष्पात्पक्षिशुनिहृष्टान्नाश्रयार्थे ॥ ४ । ४ । ९५ ॥

किरतेः कर्त्तरि स्सडादिः ॥

## अपस्किरः ॥ ३ । ३ । ३० ॥

कर्त्तर्यात्मनेपदम् ॥ अपस्किरते वृषभो हृष्टः । कुक्कुटो भक्ष्यार्थी । आश्रयार्थी वा श्वा । सस्सट्कनिर्देश किम् ? अपाकिरति । अपेति किम् । उपस्किरति ॥

## उदश्चरः साप्यात् ॥ ३ । ३ । ३१ ॥

कर्त्तर्य्यात्मनेपदम् ॥ मार्गमुच्चरते । साप्यादिति किम् ? धूम उच्चरति ॥

## समस्तृतीयया ॥ ३ । ३ । ३२ ॥

चरेर्योगे कर्त्तर्य्यात्मनेपदम् ॥ अश्वेन सञ्चरते । तृतीययेति किम् ? उभौ लोकौ सञ्चरसि ॥

## क्रीडोऽकूजने ॥ ३ । ३ । ३३ ॥

सम्पूर्वात्कर्त्तर्य्यात्मनेपदम् ॥ सङ्क्रीडते । सम इत्येव । क्रीडति । अकूजन इति किम् ? सङ्क्रीडन्त्यनांसि ॥

## अन्वाङ्परेः ॥ ३ । ३ । ३४ ॥

क्रीडेः कर्त्तर्यात्मनेपदम् ॥ अनुक्रीडते । आक्रीडते । परिक्रीडते ॥

## शप उपलम्भने ॥ ३ । ३ । ३५ ॥

कर्त्तर्य्यात्मनेपदम् ॥ उपलम्भनं प्रकाशनं शपथो वा । मैत्राय शपते । उपलम्भन इति किम् ? मैत्रं शपति ॥

## हृगो गतताच्छील्ये ॥ ३ । ३ । ३८ ॥

कर्त्र्यात्मनेपदम् ॥ गत ताच्छील्यम् । पैतृकमश्वा अनुहरन्ते । पितुरनुहरन्ते । गतेति किम्? पितुर्हरति । ताच्छील्य इति किम्? नटो राममनुहरति ॥

## पूजाचार्यकभृत्युत्क्षेपज्ञानविगणनव्यये नियः ॥ ३ । ३ । ३९ ॥

गम्ये कर्त्र्यात्मनेपदम् ॥ नयते विद्वान् स्याद्वादे । माणवकमुपनयते । कर्मकरानुपनयते । शिशुमुदानयते । नयते तत्त्वार्थे । मद्राः कारं विनयन्ते । दानं विनयते । पूजादिष्विति किम्? अजां नयति ग्रामम् ॥

## कर्तृस्थामूर्त्ताप्यात् ॥ ३ । ३ । ४० ॥

नियः कर्त्र्यात्मनेपदम् ॥ श्रमं विनयते । कर्तृस्थेति किम्? चैत्रो मैत्रस्य मन्युं विनयति । अमूर्त्तेति किम्? गडुं विनयति । आप्येति किम्? बुद्ध्या विनयति ॥

## क्रमोऽनुपसर्गात् ॥ ३ । ३ । ४७ ॥

कर्त्र्यात्मनेपदं वा ॥ क्रमते । क्रामति । अनुपसर्गादिति किम्? अनुक्रामति ॥

## वृत्तिसर्गतायने ॥ ३ । ३ । ४८ ॥

क्रमेः कर्त्र्यात्मनेपदम् ॥ वृत्तिरप्रतिबन्धः । सर्ग उत्साहः । तायनं स्फीतता । शास्त्रेऽस्य क्रमते बुद्धिः । सूत्राय क्रमते । क्रमन्तेऽस्मिन् योगाः ॥

## परोपात् ॥ ३ । ३ । ४९ ॥

आभ्यामेव क्रमेर्वृत्त्याद्यर्थात् कर्त्र्यात्मनेपदम् ॥ पराक्रमते । उपक्रमते । परोपादिति किम्? अनुक्रामति । वृत्त्यादावित्येव । पराक्रामति ॥

## वेः स्वार्थे ॥ ३ । ३ । ५० ॥

क्रमेः कर्त्र्यात्मनेपदम् ॥ साधु विक्रमते गजः । स्वार्थ इति

किम्? गजेन विक्रामति ॥

प्रोपादारम्भे ॥ ३ । ३ । ५१ ॥

क्रमेः कर्त्तर्यात्मनेपदम्॥ प्रक्रमते उपक्रमते भोक्तुम्। आरम्भ इति किम्? प्रक्रामति याबीत्यर्थ ॥

आङो ज्योतिरुद्गमे ॥ ३ । ३ । ५२ ॥

क्रमेः कर्त्तर्यात्मनेपदम् ॥ आक्रमते चन्द्रः सूर्यो वा। ज्योतिरुद्गम इति किम्। आक्रामति वटुः कुतुपम्। धूम आक्रामति ॥

दागोऽस्वास्यप्रसारविकाशे ॥ ३ । ३ । ५३ ॥

आङः कर्त्तर्यात्मनेपदम्॥ विद्यामादत्ते। स्वास्यादिवर्जन किम्? उष्ट्रो मुखं व्याददाति। कूलं व्याददाति ॥

नुप्रच्छः ॥ ३ । ३ । ५४ ॥

आङः कर्त्तर्यात्मनेपदम् ॥ आनुते शृगालः। आपृच्छते गुरून् ॥

गमेः क्षान्तौ ॥ ३ । ३ । ५५ ॥

आङः कर्त्तर्यात्मनेपदम् ॥ आगमयते गुरुम्। कञ्चित्कालं प्रतीक्षते। क्षान्ताविति किम्? आगमयति विद्याम् ॥

ह्वः स्पर्द्धे ॥ ३ । ३ । ५६ ॥

आङो गम्ये कर्त्तर्यात्मनेपदम् ॥ मल्लो मल्लमाह्वयते। स्पर्द्ध इति किम्?। गामाह्वयति ॥

सन्निवे ॥ ३ । ३ । ५७ ॥

ह्वयतेः कर्त्तर्यात्मनेपदम् ॥ संह्वयते। निह्वयते। विह्वयते ॥

उपात् ॥ ३ । ३ । ५८ ॥

ह्वयतेः कर्त्तर्यात्मनेपदम् ॥ उपह्वयते ॥

यमः स्वीकारे ॥ ३ । ३ । ५९ ॥

उपात् कर्त्तर्यात्मनेपदम् ॥ कन्यामुपयच्छते । चिन्निर्देशः किम् ? शाटकानुपयच्छति ।

वा स्वीकृतौ ॥ ३ । ३ । ६० ॥

यमेरात्मनेपदविषये सिच् किद्वत् ॥ उपायत । उपायंस्त महास्त्राणि । स्वीकृताविति किम् ? आयंस्त पाणिम् ॥

देवार्चामैत्रीसङ्गमपथिकर्तृकमन्त्रकरणे स्थः ॥३।३।६०॥

उपात्कर्त्तर्यात्मनेपदम् ॥ जिनेन्द्रमुपतिष्ठते । रथिकानुपतिष्ठते । यमुना गङ्गामुपतिष्ठते । स्रुघ्नमुपतिष्ठते पन्थाः । ऐन्द्र्या गार्हपत्यमुपतिष्ठते ॥

वा लिप्सायाम् ॥ ३ । ३ । ६१ ॥

उपात्स्थः कर्त्तर्यात्मनेपदम् ॥ भिक्षुर्गोवृन्दमुपतिष्ठते । उपतिष्ठति वा ॥

उदोऽनूर्ध्वेहे ॥ ३ । ३ । ६२ ॥

स्थः कर्त्तर्यात्मनेपदम् ॥ मुक्तावुत्तिष्ठते । अनूर्ध्वेति किम् ? आसनादुत्तिष्ठति । ईहेति किम् ? ग्रामाच्छतमुत्तिष्ठति ॥

सन्निप्रावात् ॥ ३ । ३ । ६३ ॥

स्थः कर्त्तर्यात्मनेपदम् ॥ सन्तिष्ठते । वितिष्ठते । प्रतिष्ठते । अवतिष्ठते ॥

ज्ञीप्सास्थेये ॥ ३ । ३ । ६४ ॥

स्थः कर्त्तर्यात्मनेपदम् ॥ ज्ञीप्सा आत्मप्रकाशनम् । स्थेयः सभ्यः । तिष्ठते कन्या छात्रेभ्यः । त्वयि तिष्ठते विवादः ॥

प्रतिज्ञायाम् ॥ ३ । ३ । ६५ ॥

स्थः कर्त्तर्यात्मनेपदम् ॥ नित्यं शब्दमातिष्ठते ॥

समो गिरः ॥ ३ । ३ । ६६ ॥

प्रतिज्ञार्थात् कर्त्तर्यात्मनेपदम् ॥ स्याद्वादं सङ्गिरते ॥

अवात् ॥ ३ । ३ । ६७ ॥

गिरः कर्त्तर्यात्मनेपदम् ॥ अवगिरते ॥

निह्नवे ज्ञः ॥ ३ । ३ । ६८ ॥

कर्त्तर्यात्मनेपदम् ॥ शतमपजानीते ॥

सम्प्रतेरस्मृतौ ॥ ३ । ३ । ६९ ॥

ज्ञः कर्त्तर्य्यात्मनेपदम् ॥ शतं सञ्जानीते । प्रतिजानीते । अस्मृताविति किम् ? मातुः सञ्जानाति ॥

अनन्वोः सनः ॥ ३ । ३ । ७० ॥

ज्ञः कर्त्तर्यात्मनेपदम् ॥ धर्मं जिज्ञासते । अनन्वोरिति किम् ? धर्ममनुजिज्ञासति ॥

श्रुवोऽनाङ्प्रतेः ॥ ३ । ३ । ७१ ॥

सन्नन्तात्कर्त्तर्यात्मनेपदम् ॥ शुश्रूषते गुरून् । अनाङ्प्रतेरिति किम् ? आशुश्रूषति । प्रतिशुश्रूषति ॥

स्मृदृशः । ३ । ३ ७२ ॥

सन्नन्तात् कर्त्तर्यात्मनेपदम् ॥ सुस्मूर्षते । दिदृक्षते ॥

शको जिज्ञासायाम् ॥ ३ । ३ । ७३ ॥

सन्नन्तात् कर्त्तर्यात्मनेपदम् ॥ विद्यां शिक्षते । जिज्ञासायामिति किम् ? शिक्षति ॥

गन्धनावक्षेपसेवासाहसप्रतियत्नप्रकथनोपयोगे ॥ ३ । ३ । ७६ ॥

कृगः कर्त्तर्यात्मनेपदम् ॥ गन्धनं द्रोहेण परदोषोद्घाटनम् । उत्कुरुते । अवक्षेपः कुत्सनम् । दुर्वृत्तानवकुरुते । सेवानुवृत्तिः । महामात्रानुपकुरुते । साहसमविमृश्य प्रवृत्तिः । परदारान् प्रकुरुते । प्रति

च्छति रज्जुम् ॥

## यम. सूचने ॥ ४ । ३ । ३९ ॥

आत्मनेपदविषय. सिच् क्वित् ॥ उदायत । सूचन इति किम् ? आयंस्त रज्जुम् ॥ आयंसिष्ट ।

## हन सिच् ॥ ४ ३ । ३८ ॥

आत्मनेपदविषय किद्वत् ॥ आहत ॥

## व्युदस्तप ॥ ३ । ३ । ८७ ॥

कर्मण्यसति स्वेऽङ्गे च कर्मणि कर्तर्यात्मनेपदम् ॥ वितपते उत्तपते रवि । वितपते उत्तपते पाणिम् ॥

## अणिक्कर्मणिक्कर्तृकाण्णिगोऽस्मृतौ ॥ ३ । ३ । ८८ ॥

अणिगवस्थायां यत्कर्म तदेव णिगवस्थायां कर्त्ता यस्य तस्मा ण्णिगन्तादस्मृत्यर्थात्कर्त्तर्यात्मनेपदम् ॥ आरोहयते हस्ती हस्तिपकान् । अणिगिति किम् ? आरोहयति हस्तिपकान् महामात्रः । आरोहयन्ति महामात्रेण हस्तिपकाः। णिक्किम् ? गणयते गणो गोपालकम् । कर्मेति किम् ? दर्शयति प्रदीपो भृत्यान् । णिगिति किम् ? लुनाति केदार चैत्र । लूयते केदार स्वयमेव, त प्रयुङ्क्ते लावयति केदार चैत्र । कर्त्रेति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः। तानारोहयति महामात्र. । णिग इति किम ? आरोहन्ति हस्तिनं हस्तिपका । तानारोहयते हस्तीत्यणिगि माभूत । अस्मृताविति किम् ? स्मरयति वनगुल्म. कोकिलम् ॥

## प्रलम्भे गृधिवञ्चे ॥ ३ । ३ । ८९ ॥

णिगन्तात्प्रलम्भेऽर्थे कर्तर्यात्मनेपदम् ॥ बटु गर्द्धयते, वञ्चयते वा । प्रलम्भ इति किम् ? श्वान गर्द्धयति ॥

## लीङ्लिनोऽर्चाभिभवे चाचाकर्त्तर्यपि ॥ ३ । ३ । ९० ॥

णिगन्तात्प्रलम्भेऽर्थे कर्त्तर्यात्मनेपदम् ॥ जटाभिरालापयते । श्येनो वर्त्तिकामपलापयते। कस्त्वामुल्लापयते। अकर्त्तर्यपीति किम् ? जटाभिरालाप्यते जटिलेन ॥

## स्मिङः प्रयोक्तुः स्वार्थे ॥ ३ । ३ । ९१ ॥

णिगन्तादात्मनेपदमाद्यास्याकर्त्तर्यपि ॥ जटिलो विस्मापयते । प्रयोक्तुः स्वार्थ इति किम् ? रूपेण विस्मापयति । अकर्त्तर्यपीत्येव । विस्मापनम् ॥

## बिभेतेर्भीष् च ॥ ३ । ३ । ९२ ॥ ॥

प्रयोक्तुः स्वार्थे ण्यन्तात् कर्त्तर्यात्मनेपदम्, पक्षे आद्याकर्त्तर्यपि ॥ मुण्डो भीषयते । भापयते वा । प्रयोक्तुः स्वार्थ इत्येव । कुञ्चिकया भाययति । अकर्त्तर्यपीत्येव । भीषा। भापनम् ॥

## मिथ्याकृगोऽभ्यासे ॥ ३ । ३ । ९३ ॥

ण्यन्तात्कर्त्तर्यात्मनेपदम् ॥ पद मिथ्या कारयते । मिथ्येति किम् ? पद साधु कारयति । अभ्यास इति किम् ? सकृत्पद मिथ्या कारयति ॥

## परिमुहायमायसपाट्धेवदवसदमादरुचनृत फलवति ॥ ३ । ३ । ९४ ॥

प्रधानफलवति कर्त्तरि णिगन्तादात्मनेपदम् ॥ परिमोहयते चैत्रम् । आयमयते सर्पम् । आयासयते मैत्रम् । पाययते बटुम् । धापयते शिशुम् । वादयते बटुम् । वासयते पान्थम् । दमयते अश्वम् । आदयते चैत्रेण । रोचयते मैत्रम् । नर्त्तयते नटम् ।

## ज्ञोऽनुपसर्गात् । ३ । ३ । ९६ ॥

फलवति कर्त्तर्यात्मनेपदम् । गां जानीते । फलवतीत्येव। परस्य गा जानाति ॥

वदोऽपात् ॥ ३ । ३ । ९७ ॥

फलवति कर्त्तर्यात्मनेपदम् ॥ धर्मान्नमपवदते । फलवतीत्येव । अपवदति परं स्वभावात् ॥

समुदाङो यमेरग्रन्थे ॥ ३ । ३ । ९८ ॥

फलवति कर्त्तर्यात्मनेपदम् ॥ संयच्छते व्रीहीन् । उद्यच्छते भारम् । आयच्छते भारम् । अग्रन्थ इति किम् ? चिकित्सामुद्यच्छति । फलवतीत्येव । संयच्छति ॥

पदान्तरगम्ये वा ॥ ३ । ३ । ९९ ॥

प्रक्रान्तफलवत्त्वे पदात्मनेपदमुक्तं तत्कर्त्तरि ॥ स्वं शत्रुं परिमोहयते, परिमोहयति वा । स्वं यज्ञं यजते, यजति वा । स्वान् व्रीहीन् संयच्छते, संयच्छति वा ॥

॥ इत्यात्मनेपदप्रक्रिया ॥

---

परानोः कृगः ॥ ३ । ३ । १०१ ॥

कर्त्तर्य्यात्मनेपदम् ॥ पराकरोति । अनुकरोति ॥

प्रत्यभ्यतेः क्षिपः । ३ । ३ । १०२ ॥

कर्त्तरि परस्मैपदम् ॥ प्रतिक्षिपति । अभिक्षिपति । अतिक्षिपति ॥

प्राद्वहः ॥ ३ । ३ । १०३ ॥

कर्त्तरि परस्मैपदम् ॥ प्रवहति ॥

परेर्मृषश्च । ३ । ३ । १०४ ॥

वहेः कर्त्तरि परस्मैपदम् ॥ परिमृष्यति । परिवहति ॥

व्याङ्परे रमः ॥ ३ । ३ । १०५ ॥

कर्त्तरि परस्मैपदम् ॥ विरमति । आरमति । परिरमति ॥

वोपात् ॥ ३ । ३ । १०६ ॥

कर्त्तरि परस्मैपदम् ॥ भार्यामुपरमति उपरमते वा ॥

अणिगि प्राणिकर्तृकानाप्याण्णिगः ॥ ३ । ३ । १०७ ॥

धातोः कर्त्तरि परस्मैपदम् ॥ आसयति चैत्रम् । अणिगीति किम् ? । स्वयमेवारोहयमाणं गज प्रयुङ्क्ते आरोहयते । अणिगीति गकार. किम् ? । चेतयमानं प्रयुङ्क्ते चेतयति । प्राणिकर्तृकादिति किम्?। शोषयते व्रीहीनातपः । अनाप्यादिति किम्?। कट कारयते ॥

चल्याहारार्थेङ्बुधयुधप्रुद्रुस्रुनशजन ॥ ३ । ३ । १०८ ॥

णिगन्तात्कर्त्तरि परस्मैपदम् ॥ चलयति । कम्पयति । भोजयति । आशयति चैत्रमन्नम् । सूत्रमध्यापयति शिष्यम् । बोधयति पद्मं रविः । योधयति काष्ठानि । प्रावयति राज्यम् । द्रावयत्ययः । स्रावयति तैलम् । नाशयति पापम् । जनयति पुण्यम् ॥

॥ इति परस्मैपदप्रक्रिया ॥

अथ भावकर्मणोर्विभक्तयः । तत्साप्यानाप्यादित्यात्मनेपदम् ।

क्यः शिति ॥ ३ । ४ । ७० ॥

सर्वस्माद्धातोर्भावकर्मविहिते ॥ त्वया मया अन्यैश्च भूयते । अभूयत ॥

भावकर्मणो ॥ ३ । ४ । ६८ ॥

धातोर्विहितेऽद्यतन्यास्ते ञिच् तट्र् च ॥ अभावि ॥

स्वग्रहदृशहन्भ्य स्यसिजाशी श्वस्तन्यां ञिड् वा । ३ । ४ । ६९ ॥

विहितायां भावकर्मजायाम् ॥ अभाविषाताम् । अभविषाताम् । भाविषीष्ट २ । भाविता २। भाविष्यते २। अभाविष्यत २ । अनुभूयते आनन्दश्चैत्रेण । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये ।

अन्वभावि। भाव्यते। भावयाञ्चक्रे। भावयाम्बभूवे। भावयामाहे। भाविता। भावयिता। बुभूष्यते। बुभूष्येत। बुभूषांचक्रे। बुभूषिता। बोभूय्यते। यङ्लुबन्तात्तु, बोभूयते। अबोभावि। बोभवांचक्रे। बोभाविता २। स्तूयते। अस्तावि। अर्यते। स्मर्यते। आरिता २। स्मारिता २। संस्क्रियते। दीयते। धीयते। स्थीयते॥

आत ऐः कृञ्ञौ ॥ ४ । ३ । ५३ ॥

गतोर्ञ्णिति॥ अदायि। अदायिषाताम् २। कृदिति किम्?। ददौ। ददे। दायिषीष्ट २। ग्लायते। जग्ले। शय्यते। अशायि। हन्यते। अघानि। अवधि। अघानिषाताम्। अवधिषाताम्। अहसाताम्। घानिषीष्ट। वधिषीष्ट। गृह्यते। अग्राहि। अग्राहिषाताम्। अग्रहीषाताम्। जगृहे। दृश्यते। अदर्शि। अदर्शिषाताम्। अदृक्षाताम्। गीर्यते। ग्रमि चतुरधिक शतम्। तथाहि, ञिटि अगारिध्वम्। इटि वा दीर्घे। अगरीध्वम्। अगरिध्वम्। नयाणां लत्व दत्व द्वित्वत्रय-श्चेति पञ्च वैकल्पिकानि। इत्थं षण्णवतिः। इडभावे अगीर्ढ्वम्। दशमाना द्वित्वविकल्प अष्टौ। उक्तषण्णवत्या सह सङ्कलने उक्ता सङ्ख्यैति।

"इड्दीर्घश्च ञिट् लत्व ढत्व द्वित्वत्रयं तथा।
इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम् ॥ १ ॥"

एवं सल्लोपाभावपक्षेऽपि सञ्कारवर्जानि पूर्ववद्रूपाणि। नल्लोप। मस्यते। उदित्वान्नलोपो न। नन्यत। स्रस्त। इज्यते॥

तन क्ये ॥ ४ । २ । ६३ ॥

आ वा॥ तायते। तन्यते। क्य इति किम्?। तन्तन्यते। जायते। जन्यते॥

तप कर्त्रनुतापे च ॥ ३ । ४ । ९१ ॥

कर्मकर्तरि ञिच् न॥ अतप्त तपांसि साधुः। अन्वतप्त चैत्रेण। अन्वतप्त पापं स्वकर्मणा। कर्मनुतापे चेति किम्?। अतापि पृथिवी

राज्ञा ॥ णिगन्तात्कर्मणि प्रत्यय । घट्यते । घटादेर्वा ह्रस्व इत्यादिना वा दीर्घः । अघाटि । अघटि । अघाटिपाताम् । अघटिपाताम् । अघटयिपाताम् । शमोऽदर्शने । अशामि २ । अशामिषाताम् ३ । यङन्ताद्यङ्लुबन्ताच्च णौ । अशंशामि २ । अशंशामिपाताम् ३ । ण्यन्तत्वाभावे तु ॥

## मोऽकमियमिरमिनमिगमिवमाचमः ॥ ४ । ३ । ५५ ॥

धातोर्ञिणति कृति णौ च वृद्धिर्न ॥ अशमि । कम्यादिवर्जनं किम्? । अकामि । अयामि । अरामि । अनामि । अगामि । अवामि ॥ आचामि । न जनवधः । अवधि ।

## विश्रमेर्वा । ४ । ३ । ५६ ॥

ञिणति कृति णौ च वृद्धिः ॥ व्यश्रामि । व्यश्रमि । जागुर्ञिणवि । अजागारि ॥

## भञ्जेर्ञौ वा ॥ ४ । २ । ४८ ॥

उपान्त्यनो लुक् ॥ अभाजि । अभञ्जि ॥

## ञिख्णमोर्वा ॥ ४ । ४ । १०६ ॥

लभेः स्वरात्परो नोऽन्त ॥ अलाभि । अलम्भि ॥

## उपसर्गात् खल्घञोश्च ॥ ४ । ४ । १०७ ॥

लभेः स्वरात्परो ञिख्णमोश्च नोऽन्त ॥ प्रालम्भि । उपसर्गादिति किम् ? । लाभ । ञिख्णमोर्नित्यार्थं खल्घञोस्तूपसर्गादेव खल्घञोरिति नियमार्थं वचनम् ॥

## न स्सः ॥ २ । ३ । ५९ ॥

षः ॥ सुपिस्स्यते । गौर्दुह्यते पयः । अजा ग्रामं नीयते । बोध्यते माणवकः धर्मः । माणवको धर्ममिति वा । ग्रामं गम्यते मैत्रश्चैत्रेण । कालाध्वादीनां कर्मसंज्ञाया अकर्मत्वस्य च विधानात्तद्योगे कर्मणि भावे चात्मनेपदादीनि । मासो मास वा आस्यते चैत्रेण । णिग-

अन्वभावि। भाव्यते। भावयाञ्चक्रे। भावयांबभूवे। भावयामाहे। भाविता। भावयिता। बुभूष्यते। बुभूष्येत। बुभूषाचक्रे। बुभूषिता। बोभूयते। यङ्लुबन्तात्तु, बोभूयते। अबोभावि। बोभवांचक्रे। बोभाविता २। स्तूयते। अस्तावि। अर्यते। स्मर्यते। आरिता २। स्मारिता २। संस्क्रियते। दीयते। धीयते। स्थीयते॥

## आत ऐ कृञ्ञौ ॥ ४। ३। ५३ ॥

धातोर्ञ्णिति॥ अदायि। अदायिषाताम् २। कृदिति किम्?। ददौ। ददे। दायिषीष्ट २। ग्लायते। जग्ले। शाय्यते। अशायि। हन्यते। अघानि। अवधि। अघानिषाताम्। अवधिषाताम्। अहसाताम्। घानिषीष्ट। वधिषीष्ट। गृह्यते। अग्राहि। अग्राहिषाताम्। अग्रहीषाताम्। जगृहे। दृश्यते। अदर्शि। अदर्शिषाताम्। अदृक्षाताम्। गीर्यते। ञमि चतुरधिकं शतम्। तथाहि, ञिटि अगारिध्वम्। इटि वा दीर्घे। अगरीध्वम्। अगरिध्वम्। नयाणां लत्व डत्व द्वित्वत्रयमञ्चेति पञ्च वैकल्पिकानि। इत्थं पण्णवति। इडभावे अगीर्ढ्वम्। ढत्वमाना द्वित्वविकल्प अष्टौ। उक्तपण्णवत्या सह सम्पन्ने उक्ता सङ्ख्येति।

"इड्दीर्घश्च ञिट् लत्व ढत्व द्वित्वत्रयं तथा।
इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम्॥ १॥"

एवं सल्योपाभावपक्षेऽपि सकारवर्जानि पूर्ववद्रूपाणि। नलोपः। मस्यते। उदित्वाच्चलोपो न। रध्यते। रत। इज्यते॥

## तनः क्ये ॥ ४। २। ६३ ॥

आ वा॥ तायते। तन्यते। क्य इति किम्?। तन्तन्यते। जायते। जन्यते॥

## तपः कर्त्रनुतापे च ॥ ३। ४। ९१ ॥

कर्मकर्तरि ञिच् न॥ अतप्त तपांसि साधुः। अन्वतप्त चैत्रेण। अन्वतप्त पापः स्वकर्मणा। कर्त्रनुतापे चेति किम्?। अतापि पृथिवी

न्तात्तु प्रयोज्ये । मासमास्यते मनः ॥

## ॥ इति भावकर्मप्रक्रिया ॥

---

सौकर्यादतिशयविवक्षिते कर्तृव्यापारे कारकान्तराण्यपि कर्तृसंज्ञानि भवन्ति ॥ साधुरसिश्छिनत्ति । स्थाली पचति । कर्मणः कर्तृत्वविवक्षायान्तु प्राक्सकर्मका अपि प्रायेणाकर्मकाः, तेभ्यो भावे कर्तरि च प्रत्ययः । भिद्यते कुशूलेन । कर्तरि तु ॥

### एकधातौ कर्मक्रिययैकाकर्मक्रिये ॥ ३ । ४ । ८६ ॥

एकस्मिन् धातौ कर्मस्थक्रियया पूर्वदृष्टया एका अभिन्ना सम्प्रत्यकर्मिका क्रिया यस्य तस्मिन् कर्तरि कर्मवत्कार्य धातोर्णिङ्वात्मनेपदानि स्युः ॥ क्रियते, अकारि, करिष्यते वा कटः स्वयमेव । एवं भिद्यते कुशूलः स्वयमेव । एकधाताविति किम् ?। पचत्योदनश्चैत्रः । सिध्यत्योदनः स्वयमेव । कर्मक्रियेति किम् ?। साधुरसिश्छिनत्ति । एकक्रिय इति किम् ?। स्नात्युदकं कुण्डिका । स्नात्युदकं कुण्डिकायाः । अकर्मक्रिय इति किम् ?। भिद्यमानः कुशूलः पात्राणि भिनत्ति ॥

### सृजः श्राद्धे ञिक्यात्मने तथा ॥ ३ । ४ । ८४ ॥

कर्तरि यथा पूर्वं विहितानि ॥ सृज्यते, असर्जि, स्रक्ष्यते वा माला धार्मिकः । श्राद्ध इति किम् ?। व्यत्यसृष्ट माले भिक्षुनम् ॥

### तपेस्तपः कर्मकात् ॥ ३ । ४ । ८५ ॥

कर्तरि ञिक्यात्मनेपदानि तथा ॥ तप्यते, तेपे वा तपः साधुः । ञिच् तु न । अतप्त । तप इति किम् ?। उत्तपति स्वर्णं स्वर्णकारः । कर्मेति किम् ?। तपः साधु तपति ॥

### पचिदुहेः ॥ ३ । ४ । ८७ ॥

एकधातौ कर्मस्थक्रियया पूर्वदृष्टया अकर्मिकया सकर्मिकया वा एकक्रिये कर्तरि कर्मवत्कार्ये ञिक्यात्मनेपदानि स्युः ॥ पच्यते, अ-

पाचि, पक्ष्यते वा ओदनः स्वयमेव। दुग्धे अदोहि, धोक्ष्यते वा गौः स्वयमेव। उदुम्बरः फलं पच्यते, अपक्त वा स्वयमेव। दुग्धे, अदुग्ध धोक्ष्यते वा पयो गौः स्वयमेव॥

न कर्मणा ञिच् ॥ ३ । ४ । ८८ ॥

पचिदुहेर्योगे अनन्तरोक्ते कर्त्तरि ॥ अपक्तोदुम्बरः फलं स्वयमेव। अदुग्ध गौः पयः स्वयमेव। कर्मणेति किम्? । अपाच्योदनः स्वयमेव। अनन्तरोक्ते कर्त्तरीत्येव। अपाच्युदुम्बरः फलं वायुना॥

रुधः ॥ ३ । ४ । ८९ ॥

अनन्तरोक्ते कर्त्तरि ञिच् न॥ अरुद्ध गौः स्वयमेव॥

स्वरदुहो वा ॥ ३ । ४ । ९० ॥

अनन्तरोक्ते कर्त्तरि ञिच न॥ अकृत, अकारि वा कटः स्वयमेव। अदुग्ध, अदोहि वा गौः स्वयमेव॥

णिस्नुश्र्यात्मनेपदाकर्मकात् ॥ ३ । ४ । ९२ ॥

कर्मकर्त्तरि ञिच् न॥ अपीपचदोदनं चैत्रेण मैत्रः। अपीपचतौदनः स्वयमेव। प्रास्नोष्ट गौः स्वयमेव॥

स्रो. ॥ ४ । ४ । ५२ ॥

स्ताद्यशितोऽनात्मनेपदे आदिरिट्॥ प्रस्नविष्यति। अनात्मन इत्येव। प्रास्नोष्ट। उदशिश्रियत दण्डः स्वयमेव। व्यकृत सैन्धवः स्वयमेव। ञिच्प्रतिषेधात् ञिट् भवत्येव। पाचितौदनः स्वयमेव॥

भूषार्थसन्किरादिभ्यश्च ञिक्यौ ॥ ३ । ४ । ९३ ॥

ण्यादिभ्यः कर्मकर्त्तरि न॥ अलङ्कुरुते कन्या स्वयमेव। अलमकृत कन्या स्वयमेव। चिकीर्षते, अचिकीर्षिष्ट वा कटः स्वयमेव। किरते, अकीर्ष्ट वा पांशुः स्वयमेव। गिरते, अगीर्ष्ट वा ग्रासः स्वयमेव। कारयते कटः स्वयमेव। चोरयते गौः स्वयमेव। प्रस्नुते गौः स्वय-

न्नातु प्रगोन्ने । मामपारयो अंप. ॥

## ॥ इति भावकर्मप्रक्रिया ॥

---

सौकर्यातिशयं कर्तृव्यापारं यावता स्वाप्यपि कर्तृसंज्ञानि भवन्ति ॥ साधुरसिश्छिनत्ति । स्थाली पचति । कर्मणः कर्तृत्वविवक्षायान्तु मारूसकर्मकाः अपि भावेणाकर्मकाः, तेभ्यो भावे कर्तरि च प्रत्यय । भिद्यते कुशूलेन । कर्तरि तु ॥

### एकधातौ कर्मक्रिययैकाकर्मक्रिये ॥ ३ । ४ । ८६ ॥

एकस्मिन् धातौ कर्मस्थक्रियया पूर्वदृष्टया एका अभिन्ना कर्मस्थकर्मिका क्रिया यस्य तस्मिन् कर्तरि कर्मवत्कर्तृरूप धातोस्तिङ्-आत्मनेपदानि स्यु ॥ क्रियते, अकारि, करिष्यते वा कटः स्वयमेव। एव भिद्यते कुशूलः स्वयमेव । एकधाताविति किम् ?। पचत्योदनमग्निः । सिध्यत्योदनः स्वयमेव । कर्मक्रियेति किम् ?। साध्वसिश्छिनत्ति । एकक्रिय इति किम् ?। स्रवत्युदकं कुण्डिका । स्रवत्युदकं कुण्डिकायाः । अकर्मक्रिय इति किम् ?। भिद्यमानः कुशूलः पात्राणि भिनत्ति ॥

### सृज श्राद्धे णिजन्यात्मने तथा ॥ ३ । ४ । ८४ ॥

कर्तरि यथापूर्वं विहितानि ॥ सृज्यते, असर्जि, स्रक्ष्यते वा माला धार्मिकः । श्राद्ध इति किम् ?। व्यत्यसृष्ट माले शिशुनम् ॥

### तपेस्तप कर्मकात् ॥ ३ । ४ । ८५ ॥

कर्तरि णिजन्यात्मनेपदानि तथा ॥ तप्यते, तेपे वा तपः साधु । णिच् तु न । अतप्त । तप इति किम् ?। उत्तपति स्वर्णं स्वर्णकारः । कर्मेति किम् ?। तपः साधु तपति ॥

### पचिदुहेः ॥ ३ । ४ । ८७ ॥

एतयोर्धात्वोः कर्मस्थक्रियया पूर्वदृष्टया अकर्मक्रिया सकर्मक्रिया वा एकक्रिये कर्तरि कर्मवत्कर्तृरूपे णिजन्यात्मनेपदानि स्यु ॥ पच्यते, अ-

पाचि, पक्ष्यते वा ओदनः स्वयमेव। दुग्धे अदोहि, धोक्ष्यते वा गौः स्वयमेव । उदुम्बरः फलं पच्यते, अपक्त वा स्वयमेव । दुग्धे, अदुग्ध धोक्ष्यते वा पयो गौः स्वयमेव ॥

न कर्मणा ञिच् ॥ ३ । ४ । ८८ ॥

पचिदुहेर्योगे अनन्तरोक्ते कर्त्तरि ॥ अपक्तोदुम्बरः फलं स्वयमेव । अदुग्ध गौः पयः स्वयमेव । कर्मणेति किम् ?। अपाच्योदनः स्वयमेव। अनन्तरोक्ते कर्त्तरीत्येव । अपाच्युदुम्बरः फलं वायुना ॥

रुधः ॥ ३ । ४ । ८९ ॥

अनन्तरोक्ते कर्त्तरि ञिच् न॥ अरुद्ध गौः स्वयमेव ॥

स्वरदुहो वा ॥ ३ । ४ । ९० ॥

अनन्तरोक्ते कर्त्तरि ञिच् न ॥ अकृत, अकारि वा कटः स्वयमेव । अदुग्ध, अदोहि वा गौः स्वयमेव ॥

णिस्नुश्र्यात्मनेपदाकर्मकात् ॥ ३ । ४ । ९२ ॥

कर्मकर्त्तरि ञिच् न ॥ अपीपचदोदनं चैत्रेण मैत्रः । अपीपचतौदनः स्वयमेव । प्रास्नोष्ट गौः स्वयमेव ॥

स्नोः ॥ ४ । ४ । ५२ ॥

स्ताद्यशितोऽनात्मनेपदे आदिरिट् ॥ प्रस्नविष्यति । अनात्मन इत्येव । प्रास्नोष्ट । उदशिश्रियत दण्डः स्वयमेव । व्यकृत सैन्धवः स्वयमेव । ञिच्प्रतिषेधात् ञिट् भवत्येव । पाचितौदनः स्वयमेव ॥

भूषार्थसन्किरादिभ्यश्च ञिक्यौ ॥ ३ । ४ । ९३ ॥

व्यादिभ्यः कर्मकर्त्तरि न ॥ अलङ्कुरुते कन्या स्वयमेव । अलमकृत कन्या स्वयमेव । चिकीर्षते, अचिकीर्षिष्ट वा कटः स्वयमेव । किरते, अकीर्ष्ट वा पांशुः स्वयमेव। गिरते, अगीर्ष्ट वा ग्रासः स्वयमेव। कारयते कटः स्वयमेव । चोरयते गौः स्वयमेव ।

यदि गुरूनुपासिष्यते, शास्त्रान्तं गमिष्यति । यत्स्यतीति किम्?। दक्षिणेन चेद्याति न शकटं पर्याभवति॥

कामोक्तावकच्चिति ॥ ५ । ४ । २६ ॥

गम्यायां सप्तमी ॥ कामो मे भुञ्जीत भवान् । अकच्चितीति किम्?। कच्चिज्जीवति मे माता ॥

इच्छार्थे सप्तमीपञ्चम्यौ ॥ ५ । ४ । २७ ॥

धातावुपपदे कामोक्तौ गम्यायाम् ॥ इच्छामि भुञ्जीत, भुङ्क्तां वा भवान्।

इच्छार्थे कर्मणः सप्तमी ॥ ५ । ४ । २९ ॥

धातावुपपदे तुल्यकर्तृकार्थात्कामो ॥ भुञ्जीयेतीच्छति । इच्छार्थ इति किम्?। भोजको याति। कर्मण इति किम्?। इच्छन् करोति ॥

सप्तमी चोर्ध्वमौहूर्तिके ॥ ५ । ४ । ३० ॥

प्रैषादिषु गम्येषु वर्तमानाद्धातोः इत्यपञ्चम्यौ ॥ ऊर्ध्वं मुहूर्तात्कटं कुर्याद् भवान् । भवता कटः कार्यः । कटं करोतु भवान् । भवान् हि प्रेषितोऽनुज्ञातः । भवतोऽवसरः कटकरणे ॥

स्मे पञ्चमी ॥ ५ । ४ । ३१ ॥

उपपदे प्रैषादिषु गम्येषु ऊर्ध्वमौहूर्तिकार्थाद्धातोः ॥ ऊर्ध्वं मुहूर्ताद् भवान् कटं करोतु स्म । भवान् हि प्रेषितोऽनुज्ञातो भवतोऽवसरः कटकरणे ॥

अधीष्टौ ॥ ५ । ४ । ३२ ॥

स्मे उपपदे गम्यायां पञ्चमी ॥ अङ्ग स्म विद्वन्नणुव्रतानि रक्ष ॥

सप्तमी यदि ॥ ५ । ४ । ३४ ॥

कालवेलासमयेषूपपदेषु ॥ कालो यदधीयीत भवान्। वेला यद् भुञ्जीत । समयो यच्छयीत ।

शक्तार्हे कृत्याश्च ॥ ५ । ४ । ३५ ॥

कर्त्तरि गम्ये सप्तमी ॥

भवता खलु भारो वाह्यः। उह्येत। भवान् भारं वहेत्। भवान् हि शक्तः। भवता खलु कन्या वोढव्या। उह्येत। भवान् खलु कन्यां वहेत्। भवानेतदर्हति ॥

## धातो सम्बन्धे प्रत्यया ॥ ५ । ४ । ४१ ॥

अयथाकालमपि साधव॰ ॥ विश्वदृश्वाऽस्य पुत्रो भविता। भावि कृत्यमासीत्। गोमानासीत् ॥

## भृशाभीक्ष्ण्ये हिस्वौ यथाविधि तध्वमौ च तद्युष्मादि ॥ ५ । ४ । ४२ ॥

भृशाभीक्ष्ण्यविशिष्टे सर्वकालेऽर्थे वर्तमानाद्धातोः सर्वविभक्तिवचनविषये हिस्वौ पञ्चमीसम्बन्धिनौ भवत, यथाविधि धातो स म्बन्धे, यत एव धातोर्यास्मिन्नेव कारके हिस्वौ तस्यैव धातोस्तत्कारकविशिष्टस्यैव सम्बन्धेऽनुप्रयोगे सति, तथा पञ्चम्या एव तध्वमौ तयो सम्बन्धिनि बहुत्वविशिष्टे युष्मदर्थे हिस्वौ च स्याताम्, यथाविधि धातोः सम्बन्धे ॥

## भृशाभीक्ष्ण्याविच्छेदे द्वि॰ प्राक्तसवादे ॥७।४।७३॥

द्योत्ये पदं वाक्य वा ॥ क्रियाया अवयवक्रियाणां कार्त्स्न्यं भृशार्थ। पौन'पुन्यमाभीक्ष्ण्यम्। क्रियान्तराव्यवधानमविच्छेद'। लुनीहि लुनीहीत्येवायं लुनातीत्यादि। अधीष्वाधीष्वेत्येवायमधीते इत्यादि। लुनीत लुनीतेत्येव यूयं लुनीथ। लुनीहि लुनीहीत्येवं यूयं लुनीथ। अधीध्वमधीध्वमित्येव यूयमधीध्वे। अधीष्वाधीष्वेत्येवं यूयमधीध्वे। यथाविधीति किम्?। लुनीहि लुनीहीत्येवायं लुनाति, छिनत्ति लूयते वेति धातोः सम्बन्धे माभूत् ॥

## प्रचये नवा सामान्यार्थस्य ॥ ५ । ४ । ४३ ॥

धात्वर्थाना धातोः सम्बन्धे सति धातो परौ हिस्वौ

सम्यगो च तद्युष्मदि । व्रीहीन् वप लुनीहि पुनीहि इत्येवं यतते यत्यते वा । पक्षे, व्रीहीन् वपति लुनाति पुनाति इत्येवं यतते यत्यते वा । सूत्रमधीष्व निर्युक्तिमधीष्व भाष्यमधीष्वेत्येवमधीते पठ्यते वा । पक्षे, सूत्रमधीते निर्युक्तिमधीते भाष्यमधीते इत्येवमधीते पठ्यते वा । व्रीहीन् वपत लुनीत पुनीतेत्येवं यतध्वे । व्रीहीन् वप लुनीहि पुनीहि इत्येवं यतध्वे । पक्षे, व्रीहीन् वपथ लुनीथ पुनीथेत्येवं यतध्वे । सूत्रमधीध्वं निर्युक्तिमधीध्वं भाष्यमधीध्वमित्येवमधीध्वे । सूत्रमधीष्व निर्युक्तिमधीष्व भाष्यमधीष्वेत्येवमधीध्वे । पक्षे, सूत्रमधीध्वे निर्युक्तिमधीध्वे भाष्यमधीध्वे इत्येवमधीध्वे । सामान्यार्थस्येति किम् ? । व्रीहीन् वप लुनीहि पुनीहि इत्येवं वपति लुनाति पुनातीति मा भूत् ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसमिग्नाम्नीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायामुत्तरार्द्धे त्याद्यर्थप्रक्रिया ॥

## ॥ अथ कृदन्तप्रक्रिया ॥

### आतुमोऽत्यादिः कृत् ॥ ५ । १ । १ ॥

धातोर्विधीयमानो वक्ष्यमाण प्रत्यय ॥ घनघात्यः । अत्यादिरिति किम् ? । भणिस्ते ॥

### बहुलम् ॥ ५ । १ । २ ॥

अधिकारोऽयम् ॥ कृन्निर्दिष्टादर्थादन्यत्रापि । पादहारकः । मोहनीयं कर्म । सम्प्रदानम् ॥

### कर्त्तरि ॥ ५ । १ । ३ ॥

कुदर्थविशेषोक्ति विना ॥ कर्ता ॥

**व्याप्ये घुरकेलिमकृष्टपच्यम् ॥ ५ । १ । ४ ॥**

कर्त्तरि ॥ भङ्गुरं काष्ठम् । पचेलिमा माषाः । कृष्टपच्याः शालयः ॥

**सङ्गतेऽजर्यम् ॥ ५ । १ । ५ ॥**

कर्त्तरि निपात्यते ॥ अजर्यमार्यसङ्गतम् ॥

**रुच्याव्यथ्यवास्तव्यम् ॥ ५ । १ । ६ ॥**

कर्त्तरि निपात्यते ॥ रुच्यो मोदको मैत्राय । अव्यथ्यो मुनिः । वास्तव्यः ॥

**भव्यगेयजन्यरम्यापात्याप्लाव्य नवा ॥ ५ । १ । ७ ॥**

कर्त्तरि निपात्यते ॥ भव्यः । गेयः साम्नाम् । जन्य । रम्यः । आपात्यः । आप्लाव्यः । पक्षे, भव्यम् । गेयानि सामानि । जन्यम् । रम्यम् । आपात्यम् । आप्लाव्यम् ॥

**प्रवचनीयादय ॥ ५ । १ । ८ ॥**

कर्त्तरि वा निपात्यन्ते ॥ प्रवचनीयो गुरुः शास्त्रस्य । प्रवचनीयं गुरुणा शास्त्रम् । उपस्थानीयः शिष्यो गुरोः । उपस्थनीयः शिष्येण गुरु. ।

**असरूपोऽपवादे वोत्सर्ग. प्राक् क्तेः ॥ ५ । १ । १६ ॥**

अवश्यलाव्यम् । अवश्यलवितव्यम् । असरूप इति किम् ? । घ्यणि यो न स्यात् । कार्यम् । प्राक् क्तेरिति किम् ? । कृतिः । चिकीर्षा ॥

**ते कृत्या ॥ ५ । १ । ४७ ॥**

घ्यण्तव्यानीययक्यप्प्रत्यया ॥

**ऋवर्णव्यञ्जनाद् घ्यण् ॥ ५ । १ । १७ ॥**

धातोः ॥ कार्यम् ॥

धातोर्यथासङ्ख्यम् ॥ भोग्यम् । क्तेऽनिट इति किम् ? । सङ्कोचः ।

**पाणिसमवाभ्यां सृज ॥ ५ । १ । १८ ॥**

ध्यण् ॥ पाणिसर्ग्या, समवसर्ग्या रज्जुः ॥

**उवर्णादावश्यके ॥ ५ । १ । ११९ ॥**

द्योत्ये धातोर्घ्यण ॥ लाव्यम् । अवश्यलाव्यम् ॥

**आसुयुवपिरपिलपित्रपिडिपिदभिचम्यानमः ॥ ५ । १ । २० ॥**

घ्यण् ॥ आसाव्यम् । याव्यम् । वाप्यम् । राप्यम् । लाप्यम् । अपत्राप्यम् । डेप्यम् । दाभ्यम् । आचाम्यम् । आनाम्यम् ॥

**वाधारेऽमावस्या ॥ ५ । १ । २१ ॥**

अमापूर्वाद्वसतेराधारे घ्यण् धातोर्वा ह्रस्वश्च निपात्यते ॥ अमावस्या । अमावास्या ॥

**न्यङ्कूद्गमेघादयः ॥ ४ । १ । ११२ ॥**

यथासङ्ख्यं कृतकत्वाः कृतगत्वाः कृतघत्वा निपात्यन्ते ॥ न्यङ्कुः शोकः । उद्गः । न्युद्गः । मेघः । ओघः ॥

**न वञ्चेर्गतौ ॥ ४ । १ । ११३ ॥**

कत्वम् ॥ वञ्च्यम् । गताविति किम् ? । वङ्क्यं काष्ठम् ॥

**यजेर्यज्ञाङ्गे ॥ ४ । १ । ११४ ॥**

गत्वं न ॥ पञ्च प्रयाजाः । यज्ञाङ्ग इति किम् ? । प्रयागः ॥

**घ्यण्यावश्यके ॥ ४ । १ । ११५ ॥**

चजोः कगौ न ॥ अवश्यपाच्यम् । अवश्यरञ्ज्यम् । आवश्यक इति किम् ? । पाक्यम् ॥

**निप्राद्युजः शक्ये ॥ ४ । १ । ११६ ॥**

गम्ये ण्यति गो न ॥ नियोज्यः । प्रयोज्यः ॥

भुजो भक्ष्ये ॥ ४ । १ । ११७ ॥

ण्यति गो न ॥ भोज्यं पयः । भक्ष्य इति किम् ? । भोग्या भूः ॥

त्यज्यजप्रवचः ॥ ४ । १ । ११८ ॥

ण्यति कगौ न ॥ त्याज्यम् । याज्यम् । प्रवाच्यः ॥

वचोऽशब्दनाम्नि ॥ ४ । १ । ११९ ॥

घ्यणि को न ॥ वाच्यम् । अशब्दनाम्नीति किम् ? । वाक्यम् ॥

भुजन्युब्ज पाणिरोगे ॥ ४ । १ । १२० ॥

निपात्यते ॥ भुजः पाणिः । न्युब्जो रोगविशेषः ॥

वीरुन्न्यग्रोधौ ॥ ४ । १ । १२१ ॥

निपूर्वस्य रुहेः क्विपि न्यक्पूर्वस्य चाचि वीरुन्न्यग्रोधौ भान्तौ निपात्येते ॥ वीरुत् । न्यग्रोधः ॥

सवाय्यकुण्डपाय्यराजसूयं क्रतौ ॥ ५ । १ । २२ ॥

घ्यणन्तं निपात्यते ॥ सन्नाय्यः । कुण्डपाय्यः । राजसूयः क्रतुः ॥

प्रणाय्यो निष्कामासमते ॥ ५ । १ । २३ ॥

प्राञ्नियो घ्यणायादेशौ निष्कामेऽसम्मते चार्थे ॥ प्रणाय्यः शिष्यश्चौरो वा ॥

धाय्यापाय्यसान्नाय्यनिकाय्यमृड्मानहविर्निवासे ॥ ५ । १ । २४ ॥

घ्यणन्तं निपात्यते ॥ धाय्या ऋक् ॥ पाय्यं मानम् । सान्नाय्यं हविः । निकाय्यो निवासः ॥

परिचाय्योपचाय्यानाय्यसमूह्यचित्यमग्नौ ॥५।१।२५॥

निपात्यते परिचाय्यः । उपचाय्यः । आनाय्यः । समूह्यः ।

निनीते यद्यपि,

ह्रस्वस्य त पित्कृति ॥ ४ । ४ । ११३ ॥

धातोस्त. ॥ चित्योऽग्निः ॥

याज्या दानर्चि ॥ ५ । १ । २६ ॥

यजे करणे दानर्चि ध्यण् ॥ याज्या ॥

तव्यानीयौ ॥ ५ । १ । २७ ॥

धातो ॥ शयितव्यम् । शयनीयम् ॥

निसनिक्षनिन्द कृति वा ॥ २ । ३ । ८४ ॥

अदुरुपसर्गान्त स्थाद्रादे. परस्य नो णः ॥ प्रणिसितव्यम् । प्रनिसितव्यम् । प्रणिक्षितव्यम् । प्रनिक्षितव्यम् । प्रणिन्दितव्यम् । प्रनिन्दितव्यम् ॥

स्वरात् ॥ २ । ३ । ८५ ॥

अदुरुपसर्गान्तःस्थाद्रादे कृतो नो ण ॥ प्रयाणीयम् ।

नाम्यादेरेव ने ॥ २ । ३ । ८६ ॥

अदुरुपसर्गान्त स्थाद्रदे परस्य धातो परस्य स्वरादुत्तरस्य कृतो नो ण् ॥ प्रेङ्खणीयम् । नाम्यादेरिति किम् ? । प्रमङ्गनम् ॥

व्यञ्जनादेर्नाम्युपान्त्याद्वा ॥ २ । ३ । ८७ ॥

अदुरुपसर्गान्त स्थाद्रादे परस्य कृत स्वरात्परस्य नो ण् ॥ प्रमेहणीयम् । प्रमेहनीयम् । व्यञ्जनादेरिति किम् ? । मोहणम् । नाम्युपान्त्यादिति किम् ? । प्रवपणम् । प्रवहणम् । स्वरादित्येव । प्रभुग्न । अदुरित्येव । दुर्मोहन ॥

णेर्वा ॥ २ । ३ । ८८ ॥

अदुरुपसर्गान्त स्थाद्रादे परस्य धातोर्विहितस्य कृत. स्वरात्परस्य नो ण ॥ प्रमङ्गणीयम् । प्रमङ्गनीयम् । विहितेति किम् ? ।

प्रयापूयमाणः २॥

निर्विण्णः ॥ २ । ३ । ८९ ॥

निर्विदः सत्ताल्लाभविचारणार्थात्परस्य क्तस्य नो णत्वम्। निर्विण्णः॥

न ख्यापूग्भूभाकमगमप्यायवेपो णेश्च ॥२।३।९०॥

अदुरुपसर्गान्तःस्थाद्रादेः परात् परस्य कृतो नो ण्॥ प्रख्यानीयम्। प्रख्यापनीयम्। प्रपवनीयम्। प्रपावनीयम्। प्रभवनीयम्। प्रभावनीयम्। प्रभायमानम्। प्रभापना। प्रकामिनौ। प्रकामना। प्रगमनिः। प्रगमना। प्रप्यानः। प्रप्यायना। प्रवेपनीयम्। प्रवेपना॥

देशेऽन्तरोऽयनहनः ॥ २ । ३ । ९१ ॥

नो ण् न। अन्तरयनः, अन्तर्हननो वा देशः॥

पात्पदे ॥ २ । ३ । ९२ ॥

परस्य नो ण् न॥ सर्पिष्पानम्। पद इति किम्? । सुष्णाति। सर्पिष्केण॥

पदेऽन्तरेऽनाङ्यतद्धिते ॥ २ । ३ । ९३ ॥

निमित्तकार्यिणोर्नो ण् न॥ प्रावनद्धम्। रोषभीमसुखेन। मापकुम्भवापेन। अनाङीति किम्? । प्राणद्धम्। अतद्धित इति किम्? । आर्द्रगोमयेण॥

य एच्चातः ॥ ५ । १ । २८ ॥

स्वरान्ताद्धातोः॥ चेयम्। नेयम्। देयम्। धेयम्॥

शकितकिचतियतिशसिसहियजिभजिपवर्गात्॥ ५ । १ । २९॥

यः॥ शक्यम्। तक्यम्। चत्यम्। यत्यम्। शस्यम्। सह्यम्। यज्यम्। भज्यम्। तप्यम्। गम्यम्॥

आङो यि ॥ ४ । ४ । १०४ ॥

लभः स्वरात्परः प्रत्यये नोऽन्तः॥ आलम्भ्या गौः। यीति किम्?।

आलभ्या. ॥

उपात्स्तुतौ ॥ ४ । ४ । १०५ ॥

लभः स्वरात्परो यादौ प्रत्यये गम्यया नोऽन्तः ॥ उपलम्भ्या विद्या । स्तुताविति किम् ? । उपलभ्या वार्त्ता ॥

यमिमदिगदोऽनुपसर्गात् ॥ ५ । १ । ३० ॥

य* ॥ यम्यम् । मद्यम् । गद्यम् । अनुपसर्गादिति किम् ? । आयाम्यम् ॥

चरेराङस्त्वगुरौ ॥ ५ । १ । ३१ ॥

अनुपसर्गात् य* ॥ चर्य्यम् । आचर्यो देश । अगुराविति किम् ? । आचार्य* ॥

वर्योपसर्यावद्यपण्यमुपेयर्तुमतीगर्ह्यविक्रेये ॥५।१।३२॥

निपात्यते ॥ वर्या कन्या । उपसर्या गौ* । अवद्यं पापम् । पण्य, कम्बलः ॥

स्वामिवैश्येऽर्यः ॥ ५ । १ । ३३ ॥

अर्य स्वामी वैश्यो वा ॥ आर्योऽन्य ॥

वह्यं करणे ॥ ५ । १ । ३४ ॥

वह्यं शकटम् ॥

नाम्नो वद क्यप् च ॥ ५ । १ । ३५ ॥

अनुपसर्गात् य ॥ ब्रह्मोद्यम् । नाम्न इति किम् ? । वाद्यम् । अनुपसर्गादित्येव । प्रवाद्यम् ॥

हत्याभूयं भावे ॥ ५ । १ । ३६ ॥

अनुपसर्गान्नाम्न क्यबन्त साधु ॥ ब्रह्महत्या । ब्रह्मभूयम् । भाव इति किम् ? । श्वघात्या सा ॥

अग्निचित्या ॥ ५ । १ । ३७ ॥

अग्नेः पराचे, स्त्रीभावे क्यप् ॥ अग्निचित्या ॥

**खेयमृषोद्ये ॥ ५ । १ । ३८ ॥**

निखेयम् । मृषोद्यम् ॥

**कुप्यभिद्योद्ध्यसिध्यतिष्यपुष्ययुग्याज्यसूर्यं नाम्नि ॥ ५ । १ । ३९ ॥**

क्यबन्तं संज्ञायां निपात्यते ॥ कुप्यं धनम् । भिद्यः । उद्ध्यो नदः । सिध्य । तिष्य । पुष्यः । युग्य वाहनम् । आज्यं घृतम् । सूर्यो रविः ॥

**दृवृगस्तुजुषेतिशास ॥ ५ । १ । ४० ॥**

क्यप् ॥ आदृत्य. । प्रावृत्य । अवश्यस्तुत्य । जुष्यः । इत्यः । शिष्यः ॥

**ऋदुपान्त्यादकृपिचृदृच ॥ ५ । १ । ४१ ॥**

धातोः क्यप् ॥ वृत्यम् । अकृपिचृदृच इति किम् ? । कल्प्यम् । चर्त्यम् अर्च्यम् ॥

**कृवृषिमृजिशंसिगुहिदुहिजपो वा ॥ ५ । १ । ४२ ॥**

क्यप् ॥ कृत्यम् । कार्यम् । वृष्यम् । वर्ष्यम् । मृज्यम् । मार्ग्यम् । शस्यम् । शंस्यम् । गुह्यम् । गोह्यम् । दुह्यम् । दोह्यम् । जप्यम् । जाप्यम् ॥

**जिविपून्यो हलिमुञ्जकल्के ॥ ५ । १ । ४३ ॥**

कर्मणि क्यप् ॥ जित्यो हलिः । विपूयो मुञ्ज । विनीय कल्कः ॥

**पदास्वैरिबाह्यापक्ष्ये ग्रहः ॥ ५ । १ । ४४ ॥**

क्यप् ॥ प्रगृह्य पदम् । गृह्या. परतन्त्रा । ग्रामगृह्या । गुणगृह्या ॥

**भृगोऽसंज्ञायाम् ॥ ५ । १ । ४५ ॥**

क्यप् ॥ भृत्य. । असंज्ञायामिति किम् ? । भार्या ॥

**समो वा ॥ ५ । १ । ४६ ॥**

भृगः क्यप् ॥ सम्भृत्यः । सम्भार्यं । प्रैषानुज्ञावसरे कृत्यपञ्चम्यौ । भवता कटः कार्यः । भवान् हि प्रेषितोऽनुज्ञातः, भवतोऽवसरः क-

टफणे । शक्तार्हे कृत्याश्च । भवता खलु भारो वाह्यः ॥

॥ इति कृत्यप्रत्ययाः ॥

---

णकतृचौ ॥ ५ । १ । ४८ ॥

धातोः कर्तरि ॥ पाचकः । पक्ता ॥

अर्हे तृच् ॥ ५ । १ । ३७ ॥

कर्तरि वाच्ये ॥ भवान् कन्याया वोढा ॥

तुः ॥ ४ । ८ । ५४ ॥

अनात्मनेपदविषयात् क्रम परस्य त्वाद्यशित आदिरिट् ॥ प्र-मिता ॥ अनात्मन इत्येव । प्रक्रन्ता ॥

अजे वा ॥ ४ । ४ । ३ ॥

विषयभूते वीः ॥ प्रवेता । प्राजिता । प्रवयण प्राजनो दण्डः । अनो वक्ष्यते ॥

अच् ॥ ५ । १ । ४९ ॥

धातोः ॥ करः । हरः ॥

अचि ॥ ३ । ४ । १५ ॥

यङो लुक् ॥ नेच्य । नेन्य ॥

नोतः ॥ ३ । ४ । १६ ॥

निरितश्च यङोऽचि परे लुक् ॥ योयूयः । रोरूयः ॥

लिहादिभ्यः ॥ ५ । १ । ५० ॥

अच् ॥ लेहः । शेषः । बहुवचनमाकृतिगणार्थम् ॥

सयसितस्य ॥ २ । ३ । ४७ ॥

परिनिवेः सस्य षः ॥ परिषयः । निषयः । विषयः । परिषितः । निषितः । विषितः ॥

निर्दु.सुवे· समसूते· ॥ २ । ३ । ५६ ॥

सस्य षः ॥ निःषमः । दु·षम । सुषमः । विषमः । निःषूतिः। दुःषूति ॥ सुषूतिः । विषूति ॥

वेः स्वन्दोऽक्तयोः ॥ २ । ३ । ५१ ॥

सस्य षो वा ॥ विष्कन्ता । विस्कन्ता । न चेत् क्तक्तवतू स्यातामिति किम् । विस्कन्नः । विस्कन्नवान् ॥

परे. ॥ २ । ३ । ५२॥

स्कन्दः सस्य षो वा ॥ परिष्कन्ता। परिस्कन्ता। परिष्कण्ण। परिस्कन्नः ॥

चराचरचलाचलपतापतवदावदघनाघनपाटूपट वा ॥ ४ । १ । १३ ॥

अचि कृतद्धित्वादि निपात्यते ॥ चराचरः । चलाचलः । पतापतः। वदावद·। घनाघन.। पाटूपटः। पक्षे, चरः। चल इत्यादि॥

चिक्लिदचक्नसम् ॥ ४ । १ । १४ ॥

केऽचि च कृतद्वित्व निपात्यते ॥ चिक्लिदः । चक्नसः ॥

ब्रुव ॥ ५ । १ । ५१ ॥

ब्रूगोऽचि ॥ ब्राह्मणब्रुव· ॥

नन्द्यादिभ्योऽन ॥ ५ । १ । ५२ ॥

नामगणदृष्टेभ्य. ॥ नन्दनः । वासन. । सहन· । संक्रन्दन । सर्वदमनः । नर्दन. ॥

ग्रहादिभ्यो णिन् ॥ ५ । १ । ५३ ॥

ग्राही । स्थायी ॥

नाम्युपान्त्यप्रीकृगृज्ञ. क· ॥ ५ । १ । ५४ ॥

विक्षिप ॥ प्रिय । किर । गिर । श ॥

वौ विष्किरो वा । ४ । ४ । ९६ ॥

वाच्ये निपात्यते । विष्किर, विकिरो वा पक्षी ॥

गेहे ग्रह ॥ ५ । १ । ५५ ॥

क ॥ गृह्य । गृहा ॥

उपसर्गादातो डोऽश्य ॥ ५ । १ । ५६ ॥

धातो ॥ आह्व । उपसर्गादिति किम् ? । दाय । अश्य इ 'किम ? । अवश्याय ॥

व्याघ्राघ्रे प्राणिनसो ॥ ५ । १ । ५७ ॥

निपात्येते । व्याघ्र प्राणी ॥ आघ्रा नासिका ॥

घ्राध्मापाट्धेदृश श ॥ ५ । १ । ५८ ॥

जिघ्रः । उद्धम । पिब । उद्धय । उत्पश्य ॥

साहिसातिवेद्युदेजिधारिपारिचेतेरनुपसर्गात् ॥५।१।५९

ण्यन्तान्छ ॥ साहय । सातय । वेदय । उदेजय । धारय पारयः । चेतय । अनुपसर्गादिति किम् ? । प्रसाहयिता ॥

लिम्पविन्दः ॥ ५ । १ । ६० ॥

अनुपसर्गान्छ ॥ लिम्प । विन्द ॥

निगवादेर्नाम्नि ॥ ५ । १ । ६१ ॥

यथासङ्ख्यं लिम्पविन्दः श ॥ निलिम्पा देवा । गोविन्द कुविन्द । नाम्नीति किम् ? । निलिप ।

वा ज्वलादिदुनीभूग्रहास्तोर्ण ॥ ५ । १ । ६२ ॥

अनुपसर्गात् ॥ ज्वल । ज्वाल । चल । चाल । दव दाव । नय । नाय । भव । भाव । व्यवस्थितविभाषेयम्

तेन ग्राहो मकरादि । ग्रहः सूर्यादिः । आस्रवः । आस्राव । अनुपसर्गादिति किम ? । प्रस्रवः ॥

अवहृसासस्रो ॥ ५ । १ । ६३ ॥

णः ॥ अवहार । अवसायः । संस्राव ॥

तन्व्यधीण्श्वसात. ॥ ५ । १ । ६४ ॥

धातोर्णः ॥ तान' । व्याध । प्रत्यायः । श्वासः । अवश्याय ॥

नृतुखनूरञ्ज· शिल्पिन्यकट् ॥ ५ । १ । ६५ ॥

कर्त्तरि ॥ नर्त्तकः । नर्त्तकी । खनकः । अकड्घिनोरिति नलुक् । रजकः । शिल्पिनीति किम् ? । नर्त्तिका ॥

गस्थकः ॥ ५ । १ । ६६ ॥

शिल्पिनि कर्त्तरि ॥ गायक ॥

टनण् ॥ ५ । १ । ६७ ॥

ग शिल्पिनि ॥ गायन' । गायनी ॥

ह कालव्रीह्यो. ॥ ५ । १ । ६८ ॥

टनण् ॥ हायन. सवत्सर । हायना व्रीहय ॥

प्रुसृल्वोऽक साधौ ॥ ५ । १ । ६९ ॥

प्रवक' ॥ सरक. । लवक. । साधाविति किम् ? । प्रावक ॥

आशिष्यकन् ॥ ५ । १ । ७० ॥

गम्यायां धातो ॥ जीवक । आशिषीति किम् ? । जीविका ॥

तिक्कृतौ नाम्नि ॥ ५ । १ । ७१ ॥

आशीर्विषये धातो. ॥

अहन्पञ्चमस्य क्विक्ङिति ॥ ४ । १ । १०७ ॥

धुडादौ दीर्घ ॥ शान्ति ॥

तो सनस्तिकि ॥ ४ । २ । ६४ ॥

लुगातौ वा ॥ सति॰ । साति॰ । सन्ति॰ ॥

न तिकि दीर्घश्च ॥ ४ । २ । ५९ ॥

यमिरम्यादीनां तनादीनां लुक् ॥ यन्ति । रन्ति. । नन्ति. । गन्ति. । हन्ति. । मन्ति । वन्ति. । तन्तिः । वीरभू॰ । वर्द्धमानः ॥

कर्मणोऽण् ॥ ५ । १ । ७२ ॥

निर्वर्त्यविकार्यप्राप्यरूपाद् धातोः ॥ कुम्भकार । काण्डलाव॰। वेदाध्यायः ॥

शीलिकामिभक्ष्याचरीक्षिक्षमो णः ॥ ५ । १ । ७३ ॥

कर्मण ॥ धर्मशीला । धर्मकामा । वायुभक्षा । कल्याणाचारा। सुखप्रतीक्षा । बहुक्षमा ॥

गायोऽनुपसर्गाट्टक् ॥ ५ । १ । ७४ ॥

कर्मण ॥ वक्रगी । अनुपसर्गादिति किम् ? । खस्संगायः ॥

सुरासीधो पिब ॥ ५ । १ । ७५ ॥

कर्मण परादनुपसर्गाट्टक् ॥ सुरापी । सीधुपी ॥

आतो डोऽह्वावाम ॥ ५ । १ । ७६ ॥

कर्मण पराद्धातो ॥ गोद. । अह्वावाम इति किम् ? । स्वर्गह्वाय॰ । तन्तुवाय । धान्यमायः ॥

सम. ख्य ॥ ५ । १ । ७७ ॥

कर्मणो ड ॥ गोसङ्ख्य॰ ॥

दश्चाङ ॥ ५ । १ । ७८ ॥

कर्मण स्यो ड ॥ दायाद । स्त्र्याद्यः ॥

प्राजृज्ञश्च ॥ ५ । १ । ७९ ॥

कर्मणो दो डः ॥ पथिप्रज्ञः । मपामद् ॥

आशिषि हनः ॥ ५ । १ । ८० ॥

कर्मणो डः ॥ शत्रुहः ॥

क्लेशादिभ्योऽपात् ॥ ५ । १ । ८१ ॥

कर्मभ्यो हन्तेर्डः ॥ क्लेशापहः । तमोपहः । बहुवचनादन्येभ्योऽपि ॥

कुमारशीर्षाणिणिन् ॥ ५ । १ । ८२ ॥

कर्मणो हन्तेः ॥ कुमारघाती । शीर्षघाती ॥

अचित्ते टक् ॥ ५ । १ । ८३ ॥

कर्मणः पराद्धन्तेः कर्त्तरि ॥ वातघ्नं तैलम् । अचित्त इति किम् ? । पापघातो यतिः ॥

जायापतेश्चिह्नवति ॥ ५ । १ । ८४ ॥

कर्मणः पराद्धन्ते कर्त्तरि टक् ॥ जायाघ्नो ब्राह्मणः । पतिघ्नी कन्या ॥

ब्रह्मादिभ्य ॥ ५ । १ । ८५ ॥

कर्मभ्यः पराद्धन्तेष्टक् ॥ ब्रह्मघ्नः । गोघ्नः ॥

हस्तिबाहुकपाटाच्छक्तौ ॥ ५ । १ । ८६ ॥

कर्मणः पराद्धन्तेर्गम्यायां टक् ॥ हस्तिघ्न । बाहुघ्न । कपाटघ्नः । शक्ताविति किम् ? । हस्तिघातो विषद् ॥

नगरादगजे ॥ ५ । १ । ८७ ॥

कर्मणः पराद्धन्ते कर्त्तरि टक् ॥ नगरघ्नो व्याघ्रः । अगज इति किम् ? । नगरघातो हस्ती ॥

राजघ ॥ ५ । १ । ८८ ॥

राज्ञः कर्मण पराद्धन्तेष्टक् घादेशश्च निपात्यते ॥ राजघः ॥

पाणिघताडघौ शिल्पिनि ॥ ५ । १ । ८९ ॥

टगन्तौ निपात्येते ॥ पाणिघ । ताडघ ॥

कुक्ष्यात्मोदरात् भृग खि ॥ ५ । १ । ९० ॥

कर्मण ॥ कुक्षिम्भरि । आत्मम्भरि । उदरम्भरि ॥

अर्होऽच् ॥ ५ । १ । ९१ ॥

कर्मण ॥ पूजार्हा साध्वी ॥

धनुर्दण्डत्सरुलाङ्गलाङ्कुशर्ष्टियष्टिशक्तितोमरघटाद् ग्रह ॥ ५ । १ । ९२ ॥

कर्मणोऽच् ॥ धनुर्ग्रह । दण्डग्रह इत्यादि ॥

सूत्राद्धारणे ॥ ५ । १ । ९३ ॥

कर्मणो ग्रहेरच् ॥ सूत्रग्रह । धारण इति किम्? । सूत्रग्राह ॥

आयुधादिभ्यो धृगोऽदण्डादे ॥ ५ । १ । ९४ ॥

कर्मभ्योऽच् ॥ धनुर्धर । भूधर । अदण्डादेरिति किम्? । दण्डधार । कुण्डधार ॥

हृगो वयोऽनुद्यमे ॥ ५ । १ । ९५ ॥

कर्मणो गम्येऽच् ॥ अस्थिहर श्वशिशु । अनुद्यमे, अंशहरो दायाद । मनोहरा माला । वयोऽनुद्यम इति किम्? । भारहार ॥

आङ शीले ॥ ५ । १ । ९६ ॥

कर्मण पराद्धृगो गम्येऽच् ॥ पुष्पाहर । शील इति किम्? । पुष्पाहार ॥

दृतिनाथात् पशाविः ॥ ५ । १ । ९७ ॥

कर्मण पराद्धृग कर्तरि ॥ दृतिहरि श्वा । नाथहरि सिंह ॥

रज फलेमलाद् ग्रह ॥ ५ । १ । ९८ ॥

कर्मण इ ॥ रजोग्रहि । फलेग्रहि । मलग्रहि ॥

देववातादाप. ॥ ५ । १ । ९९ ॥

कर्मण इः ॥ देवापि । वातापि ॥

सकृत्स्तम्बाद्वत्सव्रीहौ कृग ॥ ५ । १ । १०० ॥

कर्मण कर्तरि इ ॥ सकृत्करिर्वत्सः । स्तम्बकरिर्व्रीहिः ॥

कियत्तद्बहोर ॥ ५ । १ । १०१ ॥

कर्मण परात्कृग. ॥ किंकरा । यत्करा । तत्करा । बहुकरा ॥

सङ्ख्याऽहर्दिवाविभानिशाप्रभाभाश्चित्रकर्त्राद्यन्तानन्तकारबाह्वरुर्धनुर्नान्दीलिपिलिविबलिभक्तिक्षेत्रजङ्घाक्षपाक्षणदारजनिदोषादिनदिवसाट्ट. ॥ ५ । १ । १०२ ॥

कर्मण परात्कृग ॥ सङ्ख्याकर । द्विकर । अहस्कर. । दिवाकर । विभाकर । निशाकर । प्रभाकरः । भास्कर । चित्रकर । कर्तृकरः । आदिकर । अन्तकरः । अनन्तकर । कारकर. । बाहुकरः । अरुष्कर । धनुष्कर । नान्दीकर । लिपिकर । लिविकर । बलिकरः । भक्तिकर । क्षेत्रकरः । जङ्घाकरः । क्षपाकरः । क्षणदाकरः । रजनिकर । दोषाकर. । दिनकर । दिवसकर ॥

हेतुतच्छीलानुकूलेऽशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदात् ॥ ५ । १ । १०३ ॥

कर्तरि कर्मणः परात्कृगष्ट ॥ यशस्करी विद्या । श्राद्धकर । प्रेषणकर । शब्दादिवर्जन किम् ? । शब्दकार इत्यादि ॥

भृतौ कर्मण ॥ ५ । १ । १०४ ॥

कर्मण परात्कृगो गम्यायां टः ॥ कर्मकरी दासी ॥

क्षेमप्रियमद्रभद्रात् खाऽण् ॥ ५ । १ । १०५ ॥

कर्मणः परात्कृगः ॥ क्षेमङ्करः । क्षेमकारः । प्रियङ्करः । प्रियकारः । मद्रङ्करः । मद्रकारः । भद्रङ्करः । भद्रकारः । कथं योगक्षेमकरी लोकस्येति, उपपदविधिषु तदन्तविधेरनाश्रयणात् । अत एव मद्रूप्यादिसूत्रेऽन्तग्रहणेऽप्यनन्तग्रहणम् ॥

मेघर्त्तिभयाभयात्खः ॥ ५ । १ । १०६ ॥

कर्मणः परात्कृगः ॥ मेघङ्करः । ऋतिङ्करः । भयङ्करः । अभयङ्करः ॥

प्रियवशाद्वदः ॥ ५ । १ । १०७ ॥

कर्मणः खः ॥ प्रियंवदः । वशंवदः ॥

द्विषन्तपपरन्तपौ ॥ ५ । १ । १०८ ॥

द्विषत्पराभ्यां कर्मभ्यां परात् ण्यन्तात्तपेः खो ह्रस्वो द्विषतोऽपं निपात्यते ॥ द्विषन्तपः । परन्तपः ॥

परिमाणार्थमितनखात्पचः ॥ ५ । १ । १०९ ॥

कर्मणः खः ॥ प्रस्थम्पचः । मितम्पचः । नखम्पचः ॥

कूलाभ्रकरीषात्कषः ॥ ५ । १ । ११० ॥

कर्मणः खः ॥ कूलङ्कषा । अभ्रङ्कषा । करीषङ्कषा ॥

सर्वात्सहश्च ॥ ५ । १ । १११ ॥

कर्मणः कषेः खः ॥ सर्वंसहः । सर्वङ्कषः ॥

भृवृजितृतपदमेश्च नाम्नि ॥ ५ । १ । ११२ ॥

कर्मणः सहः खः ॥ विश्वम्भरा भूः । पतिम्वरा कन्या । शत्रुञ्जयोऽद्रिः । रथन्तरं साम । शत्रुन्तपो राजा । बलिन्दमः कृष्णः । शत्रुंसहो राजा । नाम्नीति किम् । कुटुम्बभारः ॥

धारेर्धर्च ॥ ५ । १ । ११३ ॥

कर्मणः सञ्ज्ञायां ख ॥ वसुन्धरा भूः ॥

पुरन्दरभगन्दरौ ॥ ५ । १ । ११४ ॥

सञ्ज्ञायां ख्यान्तौ निपात्येते । पुरन्दरः शक्रः । भगन्दरो व्याधि ॥

वाचयमो व्रते ॥ ५ । १ । ११५ ॥

वाचंयमो व्रती ॥

मन्याण्णिन् ॥ ५ । १ । ११६ ॥

कर्मणः ॥ पण्डितमानी बन्धोः ॥

कर्त्तुः खश् ॥ ५ । १ । ११७ ॥

प्रत्ययार्थात्कर्मणः परान्मन्यतेः ॥ पण्डितम्मन्यः । कर्त्तुरिति किम् ? । पटुमानी चैत्रस्य ॥

एजे ॥ ५ । १ । ११८ ॥

कर्मणः खश् ॥ अरिमेजयः ॥

शुनीस्तनमुञ्जकूलास्यपुष्पात् ट्धे.॥ ५ । १ । ११९ ॥

कर्मण खश् ॥ शुनिन्धय । स्तनन्धयः । मुञ्जन्धयः । कूलन्धयः । आस्यन्धय । पुष्पन्धय ॥

नाडीघटीखरीमुष्टिनासिकावाताद् ध्मश्च ॥५।१।१२०॥

कर्मण. ट्धेः खश् ॥ नाडिन्धमः । नाडिन्धयः । घटिन्धम । घटिन्धयः । खरिन्धम. । खरिन्धय । मुष्टिन्धमः । मुष्टिन्धय । नासिकन्धम । नासिकन्धय. । वातन्धमः । वातन्धयः ॥

पाणिकरात् ॥ ५ । १ । १२१ ॥

कर्मणो ध्मः खश् ॥ पाणिन्धम । करन्धमः ॥

कूलादुद्रुजोद्वह ॥ ५ । १ । १२२ ॥

कर्मणः खश् ॥ कूलमुद्रुज । कूलमुद्वह ॥

क्षेमप्रियमद्रभद्रात् खाऽण् ॥ ५ । १ । १०५ ॥

कर्मणः परात्कृगः. ॥ क्षेमङ्करः । क्षेमकारः । प्रियङ्करः । प्रियकारः । मद्रङ्करः । मद्रकारः । भद्रङ्करः । भद्रकारः । कथं योगक्षेमकरी लोकस्येति, उपपदविधिषु तदन्तविधेरनाश्रयणात् । अत एव सङ्ख्यादिसूत्रेऽन्तग्रहणेऽप्यनन्तग्रहणम् ॥

मेघर्त्तिभयाभयात्खः ॥ ५ । १ । १०६ ॥

कर्मणः परात्कृगः ॥ मेघङ्करः । ऋतिङ्करः । भयङ्करः । अभयङ्करः ॥

प्रियवशाद्वदः ॥ ५ । १ । १०७ ॥

कर्मणः खः ॥ प्रियम्वदः । वशम्वदः ॥

द्विषन्तपपरन्तपौ ॥ ५ । १ । १०८ ॥

द्विषत्पराभ्यां कर्मभ्यां परात् ण्यन्तात्तपेः खो ह्रस्वो द्विषतोऽर्थ निपात्यते ॥ द्विषन्तपः । परन्तपः ॥

परिमाणार्थमितनखात्पचः ॥ ५ । १ । १०९ ॥

कर्मणः खः ॥ प्रस्थम्पचः । मितम्पचः । नखम्पचः ॥

कूलाभ्रकरीषात्कषः ॥ ५ । १ । ११० ॥

कर्मणः खः ॥ कूलङ्कषा । अभ्रङ्कषा । करीषङ्कषा ॥

सर्वात्सहश्च ॥ ५ । १ । १११ ॥

कर्मणः कषः खः ॥ सर्वंसहः । सर्वङ्कषः ॥

भृवृजितृतपदमेश्च नाम्नि ॥ ५ । १ । ११२ ॥

कर्मणः सहः खः ॥ विश्वम्भरा भूः । पतिम्वरा कन्या । शत्रुञ्जयोऽद्रिः । रथन्तरं साम । शत्रुन्तपो राजा । बलिन्दमः कृष्णः । शत्रुसहो राजा । नाम्नीति किम् । कुटुम्बभारः ॥

धारेर्धर्च ॥ ५ । १ । ११३ ॥

कर्मणः सज्ञायां ख ॥ वसुन्धरा भूः ॥

पुरन्दरभगन्दरौ ॥ ५ । १ । ११४ ॥

सज्ञायां खान्तौ निपात्येते । पुरन्दरः शक्रः । भगन्दरो व्याधि ॥

वाचयमो व्रते ॥ ५ । १ । ११५ ॥

वाचंयमो व्रती ॥

मन्याण्णिन् ॥ ५ । १ । ११६ ॥

कर्मणः ॥ पण्डितमानी बन्धोः ॥

कर्त्तु खश् ॥ ५ । १ । ११७ ॥

प्रत्ययार्थात्कर्मणः परान्मन्यतेः ॥ पण्डितम्मन्यः । कर्त्तुरिति किम् ? । पटुमानी चैत्रस्य ॥

एजे ॥ ५ । १ । ११८ ॥

कर्मणः खश् ॥ अरिमेजयः ॥

शुनीस्तनमुञ्जकूलास्यपुष्पात् ट्धे ॥ ५ । १ । ११९ ॥

कर्मण खश् ॥ शुनिन्धय । स्तनन्धयः । मुञ्जन्धय । कूलन्धयः । आस्यन्धय । पुष्पन्धय ॥

नाडीघटीखरीमुष्टिनासिकावाताद् ध्मश्च ॥५।१।१२०॥

कर्मण ट्नेः खश् ॥ नाडिन्धम । नाडिन्धयः । घटिन्धम । घटिन्धयः । खरिन्धम. । खरिन्धय । मुष्टिन्धम । मुष्टिन्धय । नासिकन्धम । नासिकन्धय । वातन्धम । वातन्धय ॥

पाणिकरात् ॥ ५ । १ । १२१ ॥

कर्मणो ध्म. खश् ॥ पाणिन्धम । करन्धम ॥

कूलादुद्रुजोद्वह ॥ ५ । १ । १२२ ॥

कर्मण खश् ॥ कूलमुद्रुज । कूलमुद्वह ॥

## वहाभ्राल्लिह ॥ ५ । १ । १२३ ॥

कर्मणः खश् ॥ वहलिह । अभ्रंलिह. ॥

## बहुविध्वरुस्तिलात्तुद ॥ ५ । १ । १२४ ॥

कर्मणः खश् ॥ बहुन्तुदः । विधुन्तुद' । अरुन्तुद. । तिलन्तुद. ॥

## ललाटवातशर्द्धात्तपाजहाक ॥ ५ । १ । १२५ ॥

कर्मणः खश् ॥ ललाटन्तप. । वातमज । शर्द्धंजह ॥

## असूर्योग्राद् दृश ॥ ५ । १ । १२६ ॥

कर्मण खश् ॥ असूर्यम्पश्या राजदारा । दृशिना नञ्चस्य-नञ' सूर्येण सहासामर्थ्येऽपि गमकत्वात्समास । उग्रम्पश्य ॥

## इरम्मद. ॥ ५ । १ । १२७ ॥

इरापूर्वान्मदे खश् ह्र्याभावश्च निपात्यते ॥ इरमद ॥

## नग्नपलितप्रियान्धस्थूलसुभगाढ्यतदन्ताच्व्य-र्थेऽच्वेर्भुव खिष्णुखुकञौ ॥ ५ । १ । १२८ ॥

नग्नम्भविष्णु ॥ नग्नम्भावुक । पलितम्भविष्णु । पलितम्भावुक । प्रियम्भविष्णुः । प्रियम्भावुक. । अन्धम्भविष्णु । अन्धम्भावुक । स्थूलम्भविष्णु । स्थूलम्भावुक । सुभगम्भविष्णु' । सुभगम्भावुक । आढ्यम्भविष्णु । आढ्यम्भावुक. । तदन्तात् । सुनग्नम्भविष्णु । सुनग्नम्भावुकइत्यादि । अच्वेरिति किम् ? । आढ्यीभविता ॥

## कृग खनट् करणे ॥ ५ । १ । १२९ ॥

नग्नादिभ्योऽच्व्यन्तेभ्यश्च्व्यर्थवृत्तिभ्य' ॥ नग्नङ्करण द्यूतम् । पलितङ्करणम् । प्रियङ्करणम् । अन्धङ्करणम् । स्थूलङ्करणम् । सुभगङ्करणम् । आढ्यङ्करणम् । सुनग्नङ्करणम् । च्व्यर्थ इति किम् ? । नग्नङ्करोति द्यूतेन ॥

भावे चाशिताद्भुवः खः ॥ ५ । १ । १३० ॥

करणे ॥ आशितम्भवस्ते । आशितम्भव ओदनः

नाम्नो गमः खड्डौ च विहायसस्तु विहः ॥ ५ । १ । १३१ ॥

खः ॥ तुरङ्गः । तुरगः । विहङ्गः । विहगः । तुरङ्गमः । विहङ्गमः । सुतङ्गमो मुनिः ॥

सुगदुर्गमाधारे ॥ ५ । १ । १३२ ॥

डान्त निपात्यते ॥ सुगः । दुर्गं पन्थाः ॥

निर्गो देशे ॥ ५ । १ । १३३ ॥

आधारे डान्तो निपात्यते ॥ निर्गो देशः ॥

शमो नाम्न्यः ॥ ५ । १ । १३४ ॥

नाम्नः पराद्धातोः॥ शम्भवोऽर्हन्। नम्नीति किम्?। शङ्करी दीक्षा॥

पार्श्वादिभ्यः शीङः ॥ ५ । १ । १३५ ॥

नामभ्यः अः प्रत्ययः ॥ पार्श्वशयः। पृष्ठशयः। बहुवचनाद्यथादर्शनमन्यत्रापि॥

ऊर्ध्वादिभ्यः कर्त्तुः ॥ ५ । १ । १३६ ॥

शीङोऽः ॥ ऊर्ध्वशयः । उत्तानशयः ॥

आधारात् ॥ ५ । १ । १३७ ॥

नाम्नः शीङोऽः ॥ खशयः ॥

चरेष्टः ॥ ५ । १ । १३८ ॥

आधारात् ॥ कुरुचरी ॥

भिक्षासेनादायात् ॥ ५ । १ । १३९ ॥

चरेष्टः ॥ भिक्षाचरी। सेनाचरः । आदायचरः ॥

पुरोऽग्रतोऽग्रे सर्त्तेः ॥ ५ । १ । १४० ॥

टः ॥ पुरःसरः । अग्रतःसरः । अग्रेसरः ॥

पूर्वात्कर्तुः ॥ ५ । १ । १४१ ॥

सर्तेष्टः ॥ पूर्वसरः । कर्तुरिति किम् ? । पूर्वसारः ॥

स्थापास्नात्रः कः ॥ ५ । १ । १४२ ॥

नाम्नः ॥ समस्थः ॥ कच्छपः । नदीष्णः । धर्मत्रम् ॥

शोकापनुदतुन्दपरिमृजस्तम्बेरमकर्णेजपं प्रियालसहस्तिसूचके ॥ ५ । १ । १४३ ॥

कान्ते निपात्यते ॥ शोकापनुदः प्रियः । तुन्दपरिमृजोऽलसः । स्तम्बेरमो हस्ती । कर्णेजपोऽतिखलः । प्रियेत्यादि किम् ? । शोकापनोदो धर्माचार्यः ॥

मूलविभुजादयः ॥ ५ । १ । १४४ ॥

कान्ता यथादर्शनं निपात्यन्ते ॥ मूलविभुजो रथः । कुमुदं कैरवम् ॥

दुहेर्डुघः ॥ ५ । १ । १४५ ॥

नाम्नः ॥ कामदुघा ॥

भजो ञिण् ॥ ५ । १ । १४६ ॥

नाम्नः ॥ अर्द्धभाक् ॥

मन्वन्क्वनिप्विच् क्वचित् ॥ ५ । १ । १४७ ॥

नाम्नः परात् धातोः ॥ इन्द्रशर्मा ॥

वन्याङ् पञ्चमस्य ॥ ४ । २ । ६५ ॥

धातोः ॥ विजावा । सुधीवा । शुभयाः ॥

क्विप् ॥ ५ । १ । १४८ ॥

नाम्नः परात् धातोर्यथालक्ष्यम् ॥ उखास्रत् । महाभ्रट् । घ्यु-पसर्गस्येति दीर्घः ॥

छदेरिस्मन्त्रट्क्वौ ॥ ४ । २ । ३३ ॥

णौ ह्रस्वः ॥ उपच्छत् ॥

क्वौ ॥ ४ । ४ । ११९ ॥

शास आस इस् ॥ मित्रशीः । आङ इतीसि, आशीः ॥

गमां क्वौ ॥ ४ । २ । ५८ ॥

गमादीनां यथादर्शनं ङिति लुक् ॥ जनगत् । संयत् । परीतत् ॥

स्पृशोऽनुदकात् ॥ ५ । १ । १४९ ॥

नाम्नः क्विप् ॥ घृतस्पृक् । अनुदकादिति किम् ? । उदकस्पर्शः ॥

अदोऽनन्नात् ॥ ५ । १ । १५० ॥

नाम्नः क्विप् ॥ आमात् । अनन्नादिति किम् ? । अन्नादः ॥

क्रव्यात्क्रव्यादावामपक्वादौ ॥ ५ । १ । १५१ ॥

क्विप्णान्तौ साधू ॥ क्रव्यात् आममांसभक्षः । क्रव्याद् पक्वमांसभक्षः ॥

त्यदाद्यन्यसमानादुपमानाद्व्याप्ये दृशष्टक्सकौ च ॥ ५ । १ । १५२ ॥

व्याप्यादेव क्विप् ॥ त्यादृशः । त्यादृक्षः । त्यादृक् । अन्यादृशः । अन्यादृक्षः । अन्यादृक् । सदृशः । सदृक्षः । सदृक् । व्याप्यादिति किम् ? । तेनेव दृश्यते ॥

कर्तुर्णिन् ॥ ५ । १ । १५३ ॥

उपमानात्परात्कर्तुः ॥ उष्ट्रक्रोशी ॥

अजाते शीले ॥ ५ । १ । १५४ ॥

नाम्नः परात्ताच्छील्ये णिन् ॥ उष्णभोजी । प्रस्थायी । अजातेरिति किम् ? । [illegible] । शील इति किम् ? । उष्णभोजो मन्दः ॥

साधौ ॥ ५ । १ । १५५ ॥

नाम्नः पराच्छीलार्थात् णिन् ॥ साधुकारी ॥

ब्रह्मणो वदः ॥ ५ । १ । १५६ ॥

णिन् ॥ ब्रह्मवादी ॥

व्रताभीक्ष्ण्ये ॥ ५ । १ । १५७ ॥

गम्ये नाम्नः पराद्धातोर्णिन् ॥ स्थण्डिलशायी । क्षीरपायिण उशीनराः ॥

करणाद्यजो भूते ॥ ५ । १ । १५८ ॥

नाम्नो णिन् ॥ अग्निष्टोमयाजी ॥

निन्द्ये व्याप्यादिन्विक्रियः ॥ ५ । १ । १५९ ॥

नाम्नः पराद् भूतार्थात् कर्तरि ॥ सोमविक्रयी । निन्द्य इति किम् ? । धान्यविक्रायः ॥

हनो णिन् ॥ ५ । १ । १६० ॥

व्याप्यात्पराद् भूतार्थान्निन्द्ये कर्तरि ॥ पितृघाती । निन्द्य इति किम् ? । शत्रुघातः ॥

ब्रह्मभ्रूणवृत्रात् क्विप् ॥ ५ । १ । १६१ ॥

कर्मणः पराद् भूतार्थाद्धन्तेः ॥ ब्रह्महा । भ्रूणहा । वृत्रहा । नियमार्थं वचनम् ॥

कृगः सुपुण्यपापकर्ममन्त्रपदात् ॥ ५ । १ । १६२ ॥

कर्मणो भूते क्विप् ॥ सुकृत् । पुण्यकृत् । पापकृत् । कर्मकृत् । मन्त्रकृत् । पदकृत् । इदमपि नियमार्थम् ॥

सोमात्सुगः ॥ ५ । १ । १६३ ॥

व्याप्याद् भूते क्विप् ॥ सोमसुत् । अत्रापि नियमः । एवमुत्तरत्र ॥

अग्नेश्चेः ॥ ५ । १ । १६४ ॥

व्याप्याद् भूते क्विप् ॥ अग्निचित् ॥

कर्मण्यग्न्यर्थे ॥ ५ । १ । १६५ ॥

कर्मणः पराद् भूतार्थाच्चेः क्विप् ॥ श्येनचित् ॥

दृशः क्वनिप् ॥ ५ । १ । १६६ ॥

व्याप्याद् भूते ॥ बहुदृश्वा । भूते प्रत्ययान्तरबाधनार्थं वचनम् ॥

सहराजभ्यां कृग्युधेः ॥ ५ । १ । १६७ ॥

भूते क्वनिप् ॥ सहकृत्वा । सहयुध्वा । राजकृत्वा । राजयुध्वा ॥

अनोर्जनेर्डः ॥ ५ । १ । १६८ ॥

कर्मणो भूते ॥ पुमनुजः ॥

सप्तम्याः ॥ ५ । १ । १६९ ॥

भूतार्थाज्जनेर्डः ॥ मन्दुरजः ॥

अजाते पञ्चम्याः ॥ ५ । १ । १७० ॥

भूतार्थाज्जनेर्डः ॥ बुद्धिजः । अजातेरिति किम् ? । गजाज्जातः ॥

क्वचित् ॥ ५ । १ । १७१ ॥

उक्तादन्यत्रापि यथालक्ष्यं डः ॥ किंजः । अनुजः । अजः । स्त्रीजः । ब्रह्मज्यः । वराहः । आखः ॥

सुयजोर्ङ्वनिप् ॥ ५ । १ । १७२ ॥

भूतार्थात् ॥ सुत्वानौ । यज्वा ॥

जॄषोऽन्तृः ॥ ५ । १ । १७३ ॥

भूतार्थात् ॥ जरन्ती ॥

क्तक्तवतू ॥ ५ । १ । १७४ ॥

भूतार्थाद्धातोः ॥ कृतः । कृतवान् ॥

श्लिषशीङ्स्थासवसजनरुहजॄभजेः क्तः ॥ ५ । १ । ९ ॥

भूतादौ विहितः कर्त्तरि वा ॥ आश्लिष्टः कान्तां चैत्र । आश्लिष्टा कान्ता चैत्रेण। आश्लिष्टं चैत्रेण। अतिशयितो गुरुं शिष्या । अतिशयितो गुरुः शिष्यैः । उपस्थिता गुरुं शिष्याः । उपस्थितो गुरुः शिष्यैः । उपासिता गुरुं ते । उपासितो गुरुस्तैः । अनूषिता गुरुं ते । अनूषितो गुरुस्तैः । अनुजातास्ता ते। अनुजाता सा तैः । आरूढोऽश्वं स. । आरूढोऽश्वस्तैः । अनुजीर्णास्तां ते । अनुजीर्णा सा तैः । विभक्ता स्वं ते । विभक्तं स्वं तैः ॥

आरम्भे ॥ ५ । १ । १० ॥

धातोर्भूतादौ यः क्तो विहितः स कर्त्तरि वा ॥ प्रकृता कटं ते। प्रकृतः कटस्तैः ॥

गत्यर्थाकर्मकपिबभुजेः ॥ ५ । १ । ११ ॥

कर्त्तरि क्तो वा ॥ गतोऽसौ ग्रामम् । गतो ग्रामस्तेन । आसितोऽसौ । आसितं तेन । पीता पयः । पीतं पयः । भुक्तास्ते । भुक्तं तैः ॥

अद्यर्थाच्चाधारे ॥ ५ । १ । १२ ॥

गत्यर्थाकर्मकपिबभुजेः क्तो वा ॥ इदमेषां जग्धम्, यातम्, शयितम्, पीतम्, भुक्तं वा । पक्षे कर्तृकर्मभावयोः ॥

ह्लादो ह्रद् क्तयोश्च ॥ ४ । २ । ६७ ॥

क्तौ ॥

रदादमूर्च्छमदः क्तयोर्दस्य च ॥ ४ । २ । ६९ ॥

तो नातोनः ॥ ह्रन्नः । ह्रन्नवान् । पूर्णः । पूर्णवान् । अमूर्च्छमद इति किम् ? । मूर्त्तः । मत्तः । रदात इति किम् ? । चरितम् । मुदितम् ॥

## ऋल्वादेरेषां तो नोऽप्र. ॥ ४ । २ । ६८ ॥

क्तिक्तक्तवतूनाम् ॥ तीर्णिः । तीर्णः । तीर्णवान् । लूनिः । लूनः । लूनवान् । धूनिः । धूनः । धूनवान् । अप्र इति किम् ? । पूर्त्तिः । पूर्त्तः । पूर्त्तवान् ॥

## सूयत्याद्योदितः ॥ ४ । २ । ७० ॥

क्तयोस्तो नः ॥ सूनः । सूनवान् । दून. । दूनवान् । लग्न । लग्नवान् ॥

## व्यञ्जनान्तस्थातोऽख्याध्य. ॥ ४ । २ । ७१ ॥

धातोः परस्य क्तयोस्तो नः ॥ स्त्यान । स्त्यानवान् । व्यञ्जनेति किम् ? । यात. । अन्तस्थेति किम् ? । स्नातः । आत इति किम् ? । च्युतः । धातोर्व्यञ्जनेति किम् ? । निर्यातः । आख्याध्यइति किम् ? । ख्यातः । ध्यातः । आत. परस्येति किम् ? । दरिद्रित ॥

## पूदिव्यञ्चेर्नाशाद्यूतानपादाने ॥ ४ । २ । ७२ ॥

परस्य क्तयोस्तो न. ॥ पूना यवाः । आपूनः ॥

## वेटोऽपत ॥ ४ । ४ । ६२ ॥

धातोरेकस्वरात् क्तयोरादिरिड् न ॥ समक्त । अपत इति किम् ? । पतितः । पूर्वसूत्रे नाशाद्यूतानपादान इति किम् ? । पूतम् । द्यूतम् । उदक्त जलम् ॥

## सेर्ग्रासे कर्मकर्त्तरि ॥ ४ । २ । ७३ ॥

क्तयोस्तो न ॥ सिनो ग्रास स्वयमेव । कर्मकर्त्तरीति किम् ? । सितो ग्रासो मैत्रेण ॥

## क्षे क्षी चाध्यार्थे ॥ ४ । २ । ७४ ॥

क्तयोस्तो न ॥ क्षीणः । क्षीणवान् मैत्र । अध्यार्थ इति किम् ? ।

वाऽऽक्रोशदैन्ये ॥ ४ । २ । ७५ ॥

गम्ये क्षे परस्याध्यार्थे क्तयोस्तो नस्तद्योगे क्षीथ ॥ क्षीणायुः क्षितायुर्वा जाल्म । क्षीणकः क्षितको वा तपस्वी ॥

ऋह्रीघ्राघ्रात्रोन्दनुदविन्तेर्वा ॥ ४ । २ । ७६ ॥

क्तयोस्तो न ॥ ऋणम् । ऋत । ह्रीण । ह्रीत. । ह्रीणवान् । ह्रीतवान् । घ्राण. २ । घ्राणवान् २ । घ्राण. २ । घ्राणवान् २ । त्राण. २ । त्राणवान् २ ॥

डीयश्व्यैदित क्तयो ॥ ४ । ४ । ६१ ॥

गतोरादिरिट् न ॥ समुन्नः २। समुन्नवान् २ । डीन । डीनवान् । शून' । शूनवान् । त्रस्त । त्रस्तवान् । नुन्नः २। नुन्नवान्२। विन्न' २ । विन्नवान् २ । प्रथमाभ्यामप्राप्ते घ्रादिभ्यस्तु प्राप्ते विकल्प । तेन दान्ताना पूर्वेण दस्यापि नत्वम् । तकारनत्वाभावपक्षे च सन्नियोगशिष्टत्वाद्दस्यापि न ॥

दुगोरू च ॥ ४ । २ । ७७ ॥

क्तयोस्तो न' ॥ दूनः । दूनवान् । गूनः । गूनवान् ॥

क्षैशुषिपचो मकवम् ॥ ४ । २ । ७८ ॥

क्तयोस्त ॥ क्षाम । क्षामवान् । शुष्क । शुष्कवान् । पक्वः । पक्ववान् ॥

निर्वाणमवाते ॥ ४ । २ । ७९ ॥

कर्तरि क्तयोस्तो नो निपात्यते ॥ निर्वाणो मुनि । अवात इति किम् ? । निर्वातो वात ॥

अनुपसर्गाः क्षीबोल्लाघकृशपरिकृशफुल्लोत्फुल्लसफुल्ला ॥ ४ । २ । ८० ॥

क्तान्ता निपात्यन्ते ॥ क्षीब । उल्लाघ' । कृश. । परिकृश । फुल्ल । उत्फुल्ल । सम्फुल्ल. । अनुपसर्गा इति किम् ? । प्रक्षीबित ॥

भित्तं शकलम् ॥ ४ । २ । ८१ ॥

भिदे परस्य क्तस्य नो न, शकलपर्यायश्चेत् ॥ भित्तम् । भिन्नमन्यत् ॥

वित्तं धनप्रतीतम् ॥ ४ । २ । ८२ ॥

विन्दते परस्य क्तस्य नो न, धनप्रतीतयोः पर्यायश्चेत् ॥ वित्तं धनम् । वित्तः प्रतीतः । धनप्रतीतमिति किम् ? । विन्नः ॥

आदितः ॥ ४ । ४ । ७१ ॥

क्तयोरादिरिड् न ॥ ति चोपान्त्येत्युत्वम् । फुल्लः ॥

क्तयोरनुपसर्गस्य ॥ ४ । १ । ९२ ॥

प्यायः पीः ॥ पीनम् । पीनवत् । अनुपसर्गस्येति किम् ? । प्राप्यानो मेघ ॥

आङोऽन्धूधसोः ॥ ४ । १ । ९३ ॥

प्यायः क्तयोः परत पी ॥ आपीनोऽन्धु । आपीनमूध । अन्धूधसोरिति किम् ? । आप्यानश्चन्द्र । आङ एवेति नियमात् प्रप्यानमूधः ॥

स्फायः स्फीर्वा ॥ ४ । १ । ९४ ॥

क्तयोः ॥ स्फीतः । स्फीतवान् । स्फातः । स्फातवान् ॥

प्रसमः स्त्यः स्ती ॥ ४ । १ । ९५ ॥

क्तयोः ॥ प्रसस्तीतः । प्रसंस्तीतवान् । प्रसम इति किम् ? । सम्प्रस्त्यानः ॥

प्रात्तश्च मो वा ॥ ४ । १ । ९६ ॥

स्त्य क्तयोः परयो स्तीः क्तयोस्त ॥ प्रस्तीत । प्रस्तीतवान् । प्रस्तीम । प्रस्तीमवान् ॥

श्यः [illegible] नश्चास्पर्शे ॥ ४ । १ । ९७

क्तयोः परयोस्तद्योगे च क्तयोस्त ॥ मूर्त्तिः काठिन्यम्। शीनम्। शीनवद्घृतम् । शीत वर्त्तते । शीतो वायुः ॥

प्रतेः ॥ ४ । १ । ९८ ॥

श्यः क्तयोः परयोः शी, तद्योगे क्तयोस्तो नश्च ॥ प्रतिशीनः। प्रतिशीनवान् ॥

वाभ्यवाभ्याम् ॥ ४ । १ । ९९ ॥

श्यः क्तयोः परयोः शी, तद्योगे च क्तयोस्तोऽस्पर्शे नश्च ॥ अभिशीन । अभिशीनवान्। अभिश्यानः । अभिश्यानवान्। अवशीन । अवशीनवान्। अवश्यान.। अवश्यानवान्। अभिशीनं घृतम् । अभिश्यानं घृतम् । अवशीनम्, अवश्यानं वा हिमम् । अभिशीतो वायुः। अवशीतो वायुः। अभिश्यानो वायुः। अवश्यानो वायुः ॥

श्रः शृतं हविःक्षीरे ॥ ४ । १ । १०० ॥

निपात्यते ॥ शृतं हविः। शृतं क्षीरं स्वयमेव। हविःक्षीर इति किम् ?। श्राणा यवागूः ॥

श्रपेः प्रयोक्त्रैक्ये ॥ ४ । १ । १०१ ॥

क्ते हविःक्षीरयोः शृर्निपात्यते ॥ शृतं हविः क्षीरं वा चैत्रेण । हविःक्षीर इत्येव । श्रपिता यवागूः । प्रयोक्त्रैक्य इति किम् ?। श्रपितं हविश्चैत्रेण मैत्रेण ॥

लङ्गिकम्प्योरुपतापाङ्गविकृत्योः ॥ ४ । २ । ४७ ॥

उपान्त्यनः किङति लुक्। विलगितः। विकपितः। उपतापाङ्गविकृत्योरिति किम् ?। विलङ्गितः। विकम्पितः ॥

उति शवर्हादुभ्यः क्तौ भावारम्भे ॥ ४ । ३ । २६ ॥

उपान्त्ये सेटौ वा किद्वत् ॥ कुचितम् । कोचितमनेन । मकुचितः । मकोचितः । रुदितम् २ । मरुदितः २ । उनीति किम् ? । श्वितितमेभि । शवर्हात्मय इति किम् ? । मगुधितः । भावारम्भ इति किम् ? । रुन्वित ॥

## न डीङ्शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदः ॥४।३।२७॥

सेटौ क्तक्तवतू किद्वत् ॥ डयितः । डयितवान् । शयितः । शयितवान् ॥

## पूङ्क्लिशिभ्यो नवा ॥ ४ । ४ । ४५ ॥

क्तक्तवतुक्त्वामादिरिट् ॥ पवितः । पूतः । पवितवान् । पूतवान् । पवित्वा । पूत्वा । क्लिशितः । क्लिष्टः । क्लिशितवान् । क्लिष्टवान् । क्लिशित्वा । क्लिष्ट्वा । प्रधर्षितः । प्रधर्षितवान् । प्रस्वेदितः । प्रस्वेदितवान् । प्रस्वेदितः । प्रस्वेदितवान् । प्रमेदितः । प्रमेदितवान् । सेटावित्येव । डीनः । डीनवान् ॥

## मृष क्षान्तौ ॥ ४ । ३ । २८ ॥

सेटौ क्तक्तवतू किद्वत् ॥ मर्षितः । मर्षितवान् । क्षान्ताविति किम् ? । अपमृषितं वाक्यम् ॥

## सेट्क्तयोः ॥ ४ । ३ । ८४ ॥

णेर्लुक् । कारितः । कारितवान् ॥

## प्राद्दागस्त आरम्भे क्ते ॥ ४ । ४ । ७ ॥

वा ॥ प्रत्तः । प्रदत्तः । प्रादिति किम् ? । परीत्तम् ॥

## निविस्वन्ववात् ॥ ४ । ४ । ८ ॥

दागः क्ते तो वा । नीत्तम् । निदत्तम् । वीत्तम् २ । सूत्तम् २ । अनूत्तम् २ । अवत्तम् २ ।

## स्वरादुपसर्गाद्दस्ति कित्यधः ॥ ४ । ४ । ९ ॥

त्तो नित्यम् ॥ प्रत्तः । परीत्तम् । उपसर्गादिति किम् ? । दधि दत्तम् । स्वरात्किम् ? । निर्दत्तम् । दासञ्जकस्येति किम् ? । प्रदाता व्रीहयः। तीति किम्? । प्रदाय। अध इति किम् ? । निर्धीत.॥

दत् ॥ ४ । ४ । १० ॥

अधो दासञ्जस्य तादौ किति ॥ दत्त । दत्तिः । अध इत्येव । धीत ॥

दोसोमास्थ इ ॥ ४ । ४ । ११ ॥

तादौ किति ॥ निर्दित । सित्वा । मितिः । स्थितवान् ॥

छाशोर्वा ॥ ४ । ४ । १२ ॥

तादौ किति इ ॥ अवच्छित । अवच्छात । निशित । निशात ॥

शो व्रते ॥ ४ । ४ । १३ ॥

क्ते प्रयोगे नित्यमि ॥ सशित व्रतम् । संशित साधुः ॥

धाग ॥ ४ । ४ । १५ ॥

तादौ किति हिः ॥ विहितः ॥

यपि चादो जग्ध् ॥ ४ । ४ । १६ ॥

तादौ किति ॥ जग्ध । जग्धवान् ॥

क्षुधो ॥ ४ । ४ । ४० ॥

निष्कुष परयोरादिरिट् नित्यम् ॥ निष्कुषितः । निष्कुषितवान् ॥

क्षुधवसस्तेषाम् ॥ ४ । ४ । ४३ ॥

क्तक्तवतुक्त्वामादिरिट् ॥ क्षुधित. । क्षुधितवान् । उषित । उषितवान् ॥

लुभ्यञ्चेर्विमोहार्चे ॥ ४ । ४ ४४ ॥

क्तक्तवतुक्त्वामादिरिट् ॥ विलुभितः । विलुभितवान् । अञ्चित. । अञ्चितवान् । विमोहार्च इति किम् ? । लुब्धो जाल्म. । उदक्त जलम् ॥

सन्निवेरर्द. ॥ ४ । ४ । ६३ ॥

क्तयोरादिरिड् न ॥ समर्णः । समर्णवान् । न्यर्णः । न्यर्णवान् व्यर्ण । व्यर्णवान् । सन्निवेरिति किम ? । अर्दितः ॥

अविदूरेऽभे ॥ ४ । ४ । ६४ ॥

अर्देः परयोः क्तयोरादिरिड न ॥ अभ्यर्णः । अभ्यर्णवान्। अविदूर इति किम ? । अभ्यर्दितो दीन. शीतेन ॥

वर्त्तेर्वृत्त ग्रन्थे ॥ ४ । ४ । ६५ ॥

क्तं निपात्यते ॥ वृत्तो गुणश्छात्रेण। ग्रन्थ इति किम् ? । वर्त्तितं कुङ्कुमम् ॥

धृषशस. प्रगल्भे ॥ ४ । ४ । ६६ ॥

क्तयोरादिरिड् न ॥ धृष्ट' । विशस्तः । प्रगल्भ इति किम् ? । धर्षित. । विशसितः ॥

कष कृच्छ्रगहने ॥ ४ । ४ । ६७ ॥

क्तयोरादिरिड् न ॥ कष्ट दु खम् । कष्ट वनम् । कृच्छ्रगहन इति किम् ? । कषितं स्वर्णम् ॥

घुषेरविशब्दे ॥ ४ । ४ । ६८ ॥

क्तयोरादिरिड् न ॥ घुष्टा रज्जु' । घुष्टवान् । अविशब्द इति किम् ? । अवघुषित वाक्यम् ॥

बलिस्थूले दृढ ॥ ४ । ४ । ६९ ॥

दृहेर्दृंहेर्वाऽप निपात्यते ॥ दृढः । बलिस्थूल इति किम ? । दृहितम् । दृंहितम् ॥

क्षुब्धविरिब्धस्वान्तध्वान्तलग्नम्लिष्टफाण्टबाढ परिवृढ मन्थस्वरमनस्तम सक्तास्पष्टानायासभृशप्र-

भौ ॥ ४ । ४ । ७० ॥

क्षुब्ध समुद्रः ॥ क्षुब्धं नक्रैः । विरिब्धः स्वरः । स्वान्तं मनः । ध्वान्तं तमः । लग्नं सक्तम् । म्लिष्टमस्पष्टम् । फाण्टमनायाससाध्यम् । बाढं भृशम् । परिवृढः प्रभुः ॥

नवा भावारम्भे ॥ ४ । ४ । ७२ ॥

आदितो धातोः क्तयोरादिरिट् ॥ मिन्नम् । मेदितम् । प्रमिन्नः । प्रमिन्नवान् । प्रमेदितः । प्रमेदितवान् ॥

शके कर्मणि ॥ ४ । ४ । ७३ ॥

क्तयोरादिरिड् नवा ॥ शक्तः, शकितो वा घटः कर्तुम् ॥

णौ दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्तम् ॥ ४ । ४ । ७४ ॥

दमादीनां वा निपात्यते ॥ दान्तः । दमितः । शान्तः । शमितः । पूर्णः । पूरितः । दस्तः । दासितः । स्पष्टः । स्पाशितः । छन्नः । छादितः । ज्ञप्तः । ज्ञापितः ॥

श्वसजपवमरुषत्वरसंघुषास्वनामः ॥ ४ । ४ । ७५ ॥

क्तयोरादिरिड् वा न ॥ श्वस्तः । श्वसितः । विश्वस्तवान् २ । जप्तः २ । जप्तवान् २ । वान्तः २ । वान्तवान् २ । रुष्टः २ । रुष्टवान् २ । तूर्णः २ । तूर्णवान् २ । संघुष्टः २ । संघुष्टवान् २ । आस्वान्तः २ । आस्वान्तवान् २ । अभ्यान्तः २ । अभ्यान्तवान् २ ॥

हृषेः केशलोमविस्मयप्रतिघाते ॥ ४ । ४ । ७६ ॥

क्तयोरादिरिड् वा न ॥ हृष्टा हृषिता वा केशाः । हृष्टं हृषितं वा लोमभिः । हृष्टो हृषितश्चैत्रः । हृष्टा हृषिता दन्ताः ॥

अपचितः ॥ ४ । ४ । ७७ ॥

अपाच्चायेः क्तान्तस्य इडभावश्चिश्च निपात्यते वा ॥ अपचितः ।

अपचायितः॥

तत्र क्वसुकानौ तद्वत् ॥ ५ । २ । २ ॥

परोक्षामात्रविषये धातोः परौ क्वसुकानौ तौ च परोक्षेव॥ तत्र क्वसुः परस्मैपदत्वात्कर्त्तरि। कानस्त्वात्मनेपदत्वाद्भावकर्मणोरपि। शुश्रुवान्॥

घसेकस्वरातः क्वसोः ॥ ४ । ४ । ८२ ॥

धातोः परस्य परोक्षाया आदिरिट्॥ जक्षिवान्। आदिवान्। सेदिवान्। ऊषिवान्। पेचिवान्। ययिवान्। पपान्॥

गमहनविद्लविशदृशो वा ॥ ४ । ४ । ८३ ॥

क्वसोरादिरिट्॥ जग्मिवान्। जगन्वान्। जघ्निवान्। जघन्वान्। विविदिवान्। विविद्वान्। विविशिवान्। विविश्वान्। ददृशिवान्। ददृश्वान्॥

वेयिवदनाश्वदनूचानम् ॥ ५ । २ । ३ ॥

भूते क्वसुकानान्त कर्त्तरि निपात्यते॥ ईयिवान्। समीयिवान्। अनाश्वान्। अनूचानः। पक्षेऽयतनादि॰॥

दाश्वत्साह्वन्मीढ्वत् ॥ ४ । १ । १५ ॥

एते क्वसावकृतद्विस्वादयो निपात्यन्ते॥ दाश्वान्। दाश्वांसौ। साह्वान्। मीढ्वान्॥

शत्रानशावेष्यति तु सस्यौ ॥ ५ । २ । २० ॥

सदर्थाद्धातोः॥ यान्। शयानः। यास्यन्॥

अतो म आने ॥ ४ । ४ । ११४ ॥

शयिष्यमाणः॥

आसीनः ॥ ४ । ४ । ११ ॥

आस्ते. परस्यानस्यादेरीर्निपात्यते ॥ आसीनः । उदासीनः ॥

लौ माङ्याक्रोशेषु ॥ ५ । २ । २१ ॥

उपपदे गम्येषु शानानशौ वा ॥ मा पचन् वृषलो ज्ञास्यति । मा पचमानोऽसौ मर्तुकामः ॥

वा वेत्ते क्वसु ॥ ५ । २ । २२ ॥

सदर्थात् ॥ तत्त्व विद्वान् । विदन् ॥

पूङ्यजः शानः ॥ ५ । २ । २३ ॥

सदर्थात् ॥ पवमानः । यजमानः ॥

वय शक्तिशीले ॥ ५ । २ । २४ ॥

गम्ये सदर्थाद्धातोः शानः ॥ स्त्रियं गच्छमानाः । समश्नानाः । पराञ्निन्दमानाः ॥

धारीङोऽकृच्छ्रेऽतृश् ॥ ५ । २ । २५ ॥

धारयन्नाचाराङ्गम् ॥ अधीयन्द्रुमपुष्पीयम् ॥

सुग्द्विषार्हः सत्रिशत्रुस्तुत्ये ॥ ५ । २ । २६ ॥

सदर्थादतृश् ॥ सर्वे सुन्वन्तः । चौरं द्विषन् । पूजामर्हन् । एषि(?)नि ग्मि ? । सुरां सुनोति ॥

तृन् शीलधर्मसाधुषु ॥ ५ । २ । २७ ॥

सदर्थाद्धातोः ॥ कर्ता कटम् । वधूमूढां मुण्डयितारः श्राविष्ठायनाः । गन्ता खेलः ॥

भ्राज्यलङ्कृग्निराकृग्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रप इष्णुः ॥ ५ । २ । २८ ॥

शीलादिसदर्थात् ॥ भ्राजिष्णुः । अलङ्करिष्णुः । निराकरिष्णुः । भविष्णुः । सहिष्णुः । रोचिष्णुः । वर्तिष्णुः । वर्धिष्णुः । चरिष्णुः ।

मजनिष्णुः । अपत्रपिष्णुः ॥

उदः पचिपतिपदिमदे. ॥ ५ । २ । २९ ॥

शीलादिसदर्थादिष्णु ॥ उत्पचिष्णुः । उत्पतिष्णुः । उत्पदिष्णुः । उन्मदिष्णु ॥

भूजेः ष्णुक् ॥ ५ । २ । ३० ॥

शीलादिसदर्थात् ॥ भूष्णु । जिष्णुः ॥

स्थाग्लाम्लापचिपरिमृजिक्षे. स्नुः ॥ ५ । २ । ३१ ॥

शीलादिसदर्थात् ॥ स्थास्नुः । ग्लास्नुः । म्लास्नुः । पक्ष्णुः । परिमार्क्ष्णुः । क्षेप्णुः ॥

त्रसिगृधिधृषिक्षिप क्नु ॥ ५ । २ । ३२ ॥

शीलादिसदर्थात् ॥ त्रस्नुः । गृध्नु । धृष्णु । क्षिप्णु ॥

सन्भिक्षाशंसेरुः ॥ ५ । २ । ३३ ॥

चिकीर्षु. ॥ भिक्षुः । आशंसु ॥

विन्दिच्छू ॥ ५ । २ । ३४ ॥

विन्दुः ॥ इच्छुः ॥

शृवन्देरारु ॥ ५ । २ । ३५ ॥

विशरारुः ॥ वन्दारुः ।

दाधेसिशदसदो रु ॥ ५ । २ । ३६ ॥

दारुः ॥ धारु. । सेरु । शद्रुः । सद्रु. ॥

शीङ्श्रद्धानिद्रातन्द्रादयिपतिगृहिस्पृहेरालुः ॥ ५ । २ । ३७ ॥

शीलादिसदर्थात् ॥ शयालु । श्रद्धालु । निद्रालु । तन्द्रालुः । निपातनाच्चदो [illegible] । दयालु । पतिगृहिस्पृहयोऽदन्तार्थी रा-

दिका. । पतयालुः । गृहयालु' । स्पृहयालु' ॥

**डौ सासहिवावहिचाचलिपापति ॥ ५ । २ । ३८ ॥**

शीलादौ सन्यर्थे निपात्यते। सासहि' । वावहिः । चाचलिः । पापतिः ॥

**सत्रिचक्रिदधिजज्ञिनेमि ॥ ५ । २ । ३९ ॥**

एते शीलादौ सत्यर्थे कृतद्विर्वचना डिप्रत्ययान्ता निपात्यन्ते। सत्रि. । चक्रि । दधि. । जज्ञि । नेमि' ॥

**शृकमगमहनवृषभूस्थ उकण् ॥ ५ । २ । ४० ॥**

शीलादिसदर्थात् ॥ शारुक । कामुक । आगामुक । घातुक । वर्षुक. । भावुक । स्थायुक ॥

**लषपतपद ॥ ५ । २ । ४१ ॥**

शीलादिसदर्थादुकण् ॥ अभिलाषुकः । प्रपातुक । उपपादुक ॥

**भूषाक्रोधार्थजुसृगृधिज्वलशुचश्चान ॥ ५ । २ । ४२ ॥**

लषपतपद' शीलादिसदर्थात्॥ भूषण. । क्रोधनः । कोपन' । जवन. । सरण । गर्द्धन. । ज्वलनः । शोचन. । अभिलषण. । पतन. । अर्थस्य पदन ॥

**चलशब्दार्थादकर्मकात् ॥ ५ । २ । ४३ ॥**

धातोश्शीलादिसदर्थादन. ॥ चलन' । रवण. । अकर्मकादिति किम् ? । पठिता विद्याम् ॥

**इङितो व्यञ्जनाद्यन्तात् ॥ ५ । २ । ४४ ॥**

धातोश्शीलादिसदर्थादन ॥ स्पर्द्धन । वर्तन. । व्यञ्जनाद्यन्तादिति किम्?। एधिता। शयिता। अकर्मकादित्येव। वसिता वस्त्रम्॥

**न णिङ्यसूददीपदीक्ष ॥ ५ । २ । ४५ ॥**

शीलादिसदर्थादन ॥ भावयिता । क्ष्मायिता । सूदिता ।

दीपिता । दीक्षिता ॥

द्रमक्रमो यङ ॥ ५ । २ । ४६ ॥

शीलादिसदर्थादनः । दन्द्रमणः । चङ्क्रमणः॥

यजिजपिदंशिवदादूक ॥ ५ । २ । ४७ ॥

यङन्ताच्छीलादिसदर्थात् ॥ यायजूकः । जञ्जपूकः । दन्दशूकः । वावदूकः ॥

जागुः ॥ ५ । २ । ४८ ॥

शीलादिसदर्थादूक ॥ जागरूकः ॥

शमष्टकाद् घिनण् ॥ ५ । २ । ४९ ॥

शीलादिसदर्थात् ॥ शमी। दमी । तमी। श्रमी । भ्रमी। क्षमी। प्रमादी । क्रमी ॥

युजभुजभजत्यजरञ्जद्विषदुषद्रुहदुहाभ्याहनः॥५।२।५०॥

शीलादिसदर्थाद्धिनण् ॥ योगी । भोगी । भागी । त्यागी । रागी। द्वेषी। दोषी। द्रोही। दोही । अभ्याघाती । अकर्मकादित्येव। गां दोग्धा ॥

आङः क्रीडमुषः ॥ ५ । २ । ५१ ॥

शीलादिसदर्थाद् घिनण् ॥ आक्रीडी । आमोषी ॥

प्राच्च यमयसः ॥ ५ । २ । ५२ ॥

शीलादिसदर्थादाङो घिनण् ॥ प्रयामी।आयामी। प्रयासी । आयासी॥

मथलप ॥ ५ । २ । ५३ ॥

शीलादिसदर्थात् प्राद्घिनण् ॥ प्रमाथी । प्रलापी ॥

वेश्च द्रोः ॥ ५ । २ । ५४ ॥

शीलादिसदर्थात्प्राद् घिनण् ॥ विद्रावी । प्रद्रावी ॥

त्रिपरिप्रात्सर्त. ॥ ५ । २ । ५५ ॥

शीलादिसदर्थाद् घिनण् ॥ विसारी । परिसारी । प्रसारी ॥

सम. पृचैपृज्वरे ॥ ५ । २ । ५६ ॥

शीलादिसदर्थाद् घिनण् ॥ सम्पर्की । सञ्ज्वरी ॥

सत्रे सृजः ॥ ५ । २ । ५७ ॥

शीलादिसदर्थाद् घिनण् ॥ संसर्गी । विसर्गी ॥

सपरिव्यनुप्राद्वद ॥ ५ । २ । ५८ ॥

शीलादिसदर्थात् घिनण् ॥ सवादी । परिवादी । विवादी । अनुवादी । प्रवादी ॥

वेर्विचकत्थस्रम्भकषकसलसहन ॥ ५ । २ । ५९ ॥

शीलादिसदर्थाद् घिनण् ॥ विवेकी । विकत्थी । विस्रम्भी । विकाषी । विकासी । विलासी । विघाती ॥

व्यपाभेर्लप ॥ ५ । २ । ६० ॥

शीलादिसदर्थाद् घिनण् ॥ विलापी । अपलापी । अभिलापी ॥

सम्प्राद्वसात् ॥ ५ । २ । ६१ ॥

शीलादिसदर्थात् घिनण् ॥ संवासी । प्रवासी ॥

समत्यपाभिव्यभेश्चर ॥ ५ । २ । ६२ ॥

शीलादिसदर्थाद् घिनण् ॥ सञ्चारी । अतिचारी । अपचारी । अभिचारी । व्यभिचारी ॥

समनुव्यवाद्रुध ॥ ५ । २ । ६३ ॥

शीलादिसदर्थाद् घिनण् ॥ संरोधी । अनुरोधी । विरोधी । अवरोधी ॥

वेर्दह ॥ ५ । २ । ६४ ॥

शीलादिसदर्थाद् घिनण् ॥ विदाही ॥

परेर्देविमुहश्च ॥ ५ । २ । ६५ ॥

शीलादिसदर्थाद्देर्घिनण् ॥ परिदेवी । परिमोही । परिदाही ॥

क्षिपरट. ॥ ५ । २ । ६६ ॥

परिपूर्वाच्छीलादिसदर्थाद् घिनण् ॥ परिक्षेपी । परिराटी ॥

वादेश्च णक॰ ॥ ५ । २ । ६७ ॥

परिपूर्वाच्छीलादौ क्षिपरटः ॥ परिवादकः । परिक्षेपकः । परिराटक॰ ॥

निन्दहिंसक्लिशखादविनाशिव्याभाषासूयानेकस्वरात् ॥ ५ । २ । ६८ ॥

शीलादिसदर्थाण्णकः॥ निन्दकः । हिंसकः । क्लेशकः। खादकः । विनाशकः । व्याभाषक । असूयकः । चकासकः ॥

उपसर्गाद्देवृदेविक्रुश॰ ॥ ५ । २ । ६९ ॥

शीलादिसदर्थाण्णकः ॥ आदेवक. । परिदेवकः । आक्रोशकः ॥

वृङ्भिक्षिलुण्टिजल्पिकुट्टादाक. ॥ ५ । २ । ७० ॥

शीलादिसदर्थात् ॥ वराकी । भिक्षाक । लुण्टाकः । जल्पाक । कुट्टाकः ॥

प्रात्सूजोरिन् ॥ ५ । २ । ७१ ॥

शीलादिसदर्थात् ॥ प्रसवी । प्रजवी ॥

जीणृदृक्षिविश्रिपरिभूवमाभ्यमाव्यथ॰ ॥ ५ । २ । ७२ ॥

शीलादिसदर्थादिन् ॥ जयी । अत्ययी । आदरी । क्षयी । विश्रयी । परिभवी । वमी । अभ्यमी । अव्यथी ॥

सृघस्यदो मरक् ॥ ५ । २ । ७३ ॥

शीलादिसदर्थात् ॥ सृमर । घस्मरः । अद्मरः ॥

विपरिप्रात्सर्तेः ॥ ५ । २ । ५५ ॥

शील्यादिसदर्थाद् घिनण् ॥ विसारी । परिसारी । प्रसारी ॥

सम्पृचेपृज्वरे ॥ ५ । २ । ५६ ॥

शील्यादिसदर्थाद् घिनण् ॥ सम्पर्की । सञ्ज्वरी ॥

सवेः सृजः ॥ ५ । २ । ५७ ॥

शील्यादिसदर्थाद् घिनण् ॥ संसर्गी । विसर्गी ॥

संपरिव्यनुप्राद्वदः ॥ ५ । २ । ५८ ॥

शीलादिसदर्थाद् घिनण् ॥ संवादी । परिवादी । विवादी । अनुवादी । प्रवादी ॥

वेर्विचकत्थस्रम्भकषकसलसहनः ॥ ५ । २ । ५९ ॥

शीलादिसदर्थाद् घिनण् ॥ विवेकी । विकत्थी । विस्रम्भी । विकाषी । विकासी । विलासी । विघाती ॥

व्यपाभेर्लषः ॥ ५ । २ । ६० ॥

शीलादिसदर्थाद् घिनण् ॥ विलापी । अपलापी । अभिलापी ॥

सम्प्राद्वसात् ॥ ५ । २ । ६१ ॥

शील्यादिसदर्थात् घिनण् ॥ संवासी । प्रवासी ॥

समत्यपाभिव्यभेश्चरः ॥ ५ । २ । ६२ ॥

शीलादिसदर्थाद् घिनण् ॥ सञ्चारी । अतिचारी । अपचारी । अभिचारी । व्यभिचारी ॥

समनुव्यवाद्रुधः ॥ ५ । २ । ६३ ॥

शीलादिसदर्थाद् घिनण् ॥ संरोधी । अनुरोधी । विरोधी । अवरोधी ॥

वेर्दहः ॥ ५ । २ । ६४ ॥

शीलादिसदर्थाद् घिनण् ॥ विदाही ॥

परेर्देविमुहश्च ॥ ५ । २ । ६५ ॥

शीलादिसदर्थाद्दहर्घिनण् ॥ परिदेवी । परिमोही । परिदाही ॥

क्षिपरटः ॥ ५ । २ । ६६ ॥

परिपूर्वाच्छीलादिसदर्थाद् घिनण् ॥ परिक्षेपी । परिराटी ॥

वादेश्च णकः ॥ ५ । २ । ६७ ॥

परिपूर्वाच्छीलादौ क्षिपरटः ॥ परिवादकः । परिक्षेपकः । परिराटकः ॥

निन्दहिंसक्लिशखादविनाशिव्याभाषासूयानेकस्वरात् ॥ ५ । २ । ६८ ॥

शीलादिसदर्थाण्णकः ॥ निन्दकः । हिंसकः । क्लेशकः । खादकः । विनाशकः । व्याभाषकः । असूयकः । चकासकः ॥

उपसर्गाद्देवृदेविक्रुशः ॥ ५ । २ । ६९ ॥

शीलादिसदर्थाण्णकः ॥ आदेवकः । परिदेवकः । आक्रोशकः ॥

वृङ्भिक्षिलुण्टिजल्पिकुट्टादाकः ॥ ५ । २ । ७० ॥

शीलादिसदर्थात् ॥ वराकी । भिक्षाकः । लुण्टाकः । जल्पाकः । कुट्टाकः ॥

प्रात्सूजोरिन् ॥ ५ । २ । ७१ ॥

शीलादिसदर्थात् ॥ प्रसवी । प्रजवी ॥

जीणृदृक्षिविश्रिपरिभूवमाभ्यमाव्यथः ॥ ५ । २ । ७२ ॥

शीलादिसदर्थादिन् ॥ जयी । अत्ययी । आदरी । क्षयी । विश्रयी । परिभवी । वमी । अभ्यमी । अव्यथी ॥

सृघस्यदो मरक् ॥ ५ । २ । ७३ ॥

शीलादिसदर्थ[illegible] । घस्मरः । अद्मरः ॥

भञ्जिभासिमिदो घुर॰ ॥ ५ । २ । ७४ ॥

शीलादिसदर्थात् ॥ भङ्गुरम् । भासुरम् । मेदुरम् ॥

वेत्तिच्छिदभिद कित् ॥ ५ । २ । ७५ ॥

शीलादिसदर्थाद् घुर॰ ॥ विदुर । छिदुरः । भिदुर॰ ॥

भियो रुरुकलुकम् ॥ ५ । २ । ७६ ॥

शीलादिसदर्थात्कित् ॥ भीरुः । भीरुक । भीलुक॰ ॥

सृजीण्नशष्ट्वरप् ॥ ५ । २ । ७७ ॥

शीलादिसदर्थात्कित् ॥ सृत्वरी । जित्वरी । इत्वर । नश्वर ॥

गत्वर ॥ ५ । २ । ७८ ॥

गमेष्ट्वरप् मश्च त् निपात्यते ॥ गत्वरी ॥

स्मृयजसहिंसदीपकम्पकमनमो र॰ ॥ ५ । २ । ७९ ॥

शीलादिसदर्थात् ॥ स्मेरम् । अजस्रम् । हिंस्रः । दीप्रः । कम्प्र. । कम्रः । नम्र॰ ॥

तृपिधृषिस्वपो नजिङ् ॥ ५ । २ । ८० ॥

शीलादिसदर्थात् ॥ तृष्णक् । धृष्णक् । स्वप्नजौ ॥

स्थेशभासपिसकसो वर. ॥ ५ । २ । ८१ ॥

शीलादिसदर्थात्॥ स्थावरः। ईश्वरः।भास्वर.।पेस्वर । विकस्वर॰॥

यायावर ॥ ५ । २ । ८२ ॥

निपात्यते ॥ यायवर ॥

दिद्युद्दद्‌जगज्जुहूवाक्प्राड्धीश्रीद्रुस्रूज्वायतस्तूकटप्रूपरिव्राड्भ्राजादय. क्विप् ॥ ५ । २ । ८३ ॥

शीलादौ सत्यर्थे निपात्यन्ते ॥ दिद्युत् । दद्द् । जगत् । जुहूः ।

वाक् । तत्त्वभाट् । धी । श्री । शतद्रुः । सूः । जूः । आयतस्तूः । कटप्रू । परिव्राट् । विभ्राट् । भाः ॥

शसस्वयविप्राद् भुवो डुः ॥ ५ । २ । ८४ ॥

सदर्थात् ॥ शम्भुः । सम्भुः । स्वयम्भु । विभु । प्रभुः ॥

पुव इत्रो दैवते ॥ ५ । २ । ८५ ॥

सदर्थात्कर्त्तरि ॥ पवित्रोऽर्हन् ॥

ऋषिनाम्नोः करणे ॥ ५ । २ । ८६ ॥

सदर्थात्पुव इत्रः ॥ पवित्रोऽयमृषिः । दर्भः पवित्रः ॥

लूधूसूखनिचरसहार्त्तेः ॥ ५ । २ । ८७ ॥

सदर्थात्करणे इत्रः ॥ लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । चरित्रम् । सहित्रम् । अरित्रम् ॥

नीदांव्शसूयुयुजस्तुतुदसिसिचमिहपतपानहस्त्रट् ॥ ५ । २ । ८८ ॥

सदर्थात्करणे ॥ नेत्रम् । दात्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम् । पात्री । नध्री ॥

हलक्रोडास्ये पुवः ॥ ५ । २ । ८९ ॥

सदर्थात्करणे त्रट् ॥ पोत्रम् ॥

दशेश्च ॥ ५ । २ । ९० ॥

सदर्थात्करणे ॥ दंष्ट्रा ॥

धात्री ॥ ५ । २ । ९१ ॥

धूर्धेर्णो वा कर्मणि त्रट् ॥ धात्री ॥

ज्ञानेच्छार्च्चार्थञीच्छील्यादिभ्यः क्तः ॥ ५ । २ । ९२ ॥

मत्यर्थे ॥ राज्ञां ज्ञात', इष्ट, पूजितः । भिन्न । शीलितः । रक्षितः ॥

॥ इति पूर्वकृदन्तम् ॥

उणादय ॥ ५ । २ । ९३ ॥

सदर्थात्धातोर्बहुलम् ॥ सणाद्य धातुरूपाणि प्रत्ययाश्च तत परे । कार्यानुबन्धोपपद विज्ञानम्यमुणादिषु ॥ १ ॥

भीमादयोऽपादाने ॥ ५ । १ । १४ ॥

भीम ॥ भयानक । भीष्म ॥

सम्प्रदानाचान्यत्रोणादय ॥ ५ । १ । १५ ॥

अपादानात् ॥ फाग । कषि ॥

॥ अथोणादिविवृति ॥

कृवापाजिस्वदिसाध्यशौदस्नासनिजानिरहीण्भ्य उण् ॥ १ ॥

सदर्थेभ्य' सम्प्रदानापादानाभ्यामन्यत्र कारके भाव च संज्ञाया बहुलम् ॥ करोति कृणोति वा कारु । वायु. । पायु । जायु । स्वादु । साधु । आशु । अश्रु । दारु । स्नायुः । सानु । जानी-त्याकारनिर्देशाश्च जनवध इति वृद्धिप्रतिषेधो न । जानु । राहु । आयु ॥

अ ॥ २ ॥

धातो ॥ भव । तर ॥

नञ्‌ क्रमिगमिशमिखन्याकमिभ्यो डित् ॥ ३ ॥

अ । नक्र । नग । नश । नख । नाक' ॥

तुदादिविपिगुहिभ्यः कित् ॥ ५ ॥

अ ॥ तुदः । नुदः । सुरः । निपम् । गुह ॥

भीणूशलिवलिकल्यतिमर्च्यर्चिमृजिकुतुस्तुदा-
धाराशाकापानिहानञ्शुभ्य. क॰ ॥ २१ ॥

मेरु ॥ एक । शल्कम । वल्क. । कल्कः । अल्कः । मर्क ।
अर्क॰ । मार्कः । कोक॰ । तोकम् । स्तोकम् । दाकः । धाकः । राकः ।
शाकः । काक । पाकः । निहाकः । निहाका । अशोक ॥

कृगो वा ॥ २३ ॥

कित् क॰ ॥ कर्कः । क्रकः ॥

निष्कतुरुष्कोदर्कालर्कशुल्कश्वफल्ककिञ्चल्कोल्का-
पृक्षचेक्ककेकायस्कादय ॥ २६ ॥

कान्ता निपात्यन्ते ॥ निष्क । तुरुष्क इत्यादि । आदिग्रहणात्
ह्कारपृक्कादयः ॥

दृकनृस्तृशृधृवृमृस्तुकुक्षुलङ्घिचरिचटिकटिकण्टि-
चणिचषिकलिवमितम्यविदेविबन्धिकनिजनिमशिक्षा-
रिकूरिवृतिगल्लिमल्लिसल्ल्यलिभ्योऽक ॥ २७ ॥

दरक॰ ॥ करक । नरक । इत्यादि ॥

कीचकपेचकमेचकमेनकार्भकधमकवधकलघक-
जहकेरकैडकाश्मकलमकक्षुल्लकवट्वकाढकादय. ॥२३॥

निपात्यन्ते ॥ कीचक॰ । पेचक । मेचकः । इत्यादि ॥

शलिव[illegible]

न्दिमन्दिनमिकृदुपूमनिरजिभ्य आक ॥ ३४ ॥

शलाका ॥ नलाका । पताका । वर्साका ॥

पिवे पिन्पिण्यौ च ॥ ३६ ॥

पिनाकम् । पिण्याक ॥

क्षीकल्यलिदलिस्फटिदूपिभ्य इक ॥ ३८ ॥

क्षयिक. ॥ अल्पिकम् । दलिकम् । स्फटिक । दूपिका ॥

स्यमिकपिदूष्यनिमनिमलिवल्यलिपालिकणिभ्य ईक ॥ ४६ ॥

स्यमीक ॥ कपीका । दूषीका । अनीकम् । मनीक । मलीकम् । व्यलीक. । अलीकम् । पालीकम् । कणीक. ॥

मिवमिकटिभल्लिकुहेरुक ॥ ५१ ॥

मयुक ॥ वमुकः । कटुकः । भल्लुकः । कुहुकम् ॥

शल्यणोर्णित् ॥ ५९ ॥

ऊकः ॥ शाल्लुकम् । आणूकम् ॥

शम्बुकशाम्बूकवृधूकमधूकोलूकोरुबूकचरूकादय ॥ ६१ ॥

उकान्ता निपात्यन्ते शमेर्वोऽन्तो दीर्घश्च वा ॥ शम्बूक । शाम्बुक । वृगो वृध । वृधूक. । मदेर्धः । मधूक. । अलेल्लुपान्त्यस्य । उलूक । उरपूर्वाद्वाते' कित् ॥ उरूबूक । वृधेर्लोप । चरूक । आदि ग्रहणान्नूकादय ॥

जीवेरातृको जैव् च ॥ ६७ ॥

जैवातृक ॥

वृतेस्तिकः ॥ ७५ ॥

वर्त्तिका ॥

इष्यशिमसिभ्यस्तकक् ॥ ७७ ॥

इष्टका । अष्टका । मस्तकः ॥

शमिमनिभ्यां खः ॥ ८४ ॥

शङ्खः । मङ्खः ॥

श्यतेरिच्च वा ॥ ८५ ॥

खः ॥ शिखा । विशिखा । विशिख । शाखा । विशाखा । विशाखः ॥

पूमुहोः पुन्मूरौ च ॥ ८६ ॥

खः ॥ पुङ्खः । मूर्खः ॥

अशेर्डित् ॥ ८७ ॥

ख ॥ खम् । नास्य खमस्ति नखः । शोभनानि खानि अस्मिन् सुखम् । दुष्टानि खान्यस्मिन् दुःखम् ॥

महेरुच्चास्य वा ॥ ८९ ॥

खः कित् अन्तश्चुट् ॥ मुखम् । मखः ॥

मयेधिभ्यामूखेखौ ॥ ९१ ॥

मयूख ॥ एधिख ॥

गम्यमिरम्यजिगद्यदिच्छागडिखडिगमृवृसृभ्यो गः ॥ ९२ ॥

गङ्गा ॥ अङ्गम् । अङ्गः समुद्रादिः । अङ्गा जनपदः । रङ्गः । वेगः । गद्गः । अद्गः । छागः । गड्गः । खड्गः । गर्गः । भर्गः । वर्गः । स्वर्गः ॥

गः ॥ पूगः । भृङ्गः ॥

भृष्टृभ्यां नोऽन्तश्च ॥ ९५ ॥

पित् गः ॥ भृङ्गः । धृङ्गः ॥

शृङ्गशार्ङ्गादय ॥ ९६ ॥

शृणातेर्ह्रस्वो नोऽन्तश्च ॥ शृङ्गम् । शृङ्गिः । शार्ङ्गम् । आदिग्रहणात् हृञ् हरणे, हार्ङ्गः ॥

तडेराग ॥ ९७ ॥

तडागम् ॥

पतितमितृपकृशल्याटेरङ्ग ॥ ९८ ॥

पतङ्गः ॥ तमङ्गः । मतङ्गः । पतङ्गः । करङ्गः । शरङ्गः । ल्यङ्गः । आदिग्रहणादन्येभ्योऽपि ॥

विडिनिलिकुरिमृदिपिशिभ्य कित् ॥ १०१ ॥

गङ्गः । विडङ्गः । लिङ्गः । कुरङ्गः । मृदङ्गः । पिशङ्गः ॥

स्थार्तिजनिभ्यो घः ॥ १०९ ॥

स्थाघः ॥ अर्घः । जङ्घा ॥

कृपूसमिण्भ्यश्चट् दीर्घश्च ॥ ११२ ॥

कूचः ॥ कूची । पूचः । समीच ॥

दिव्यविशुकुकार्विशकिकड्डिकृपिचपिचमिकम्येधिकार्किमार्किकक्खितृकृस्टभृघृभ्योऽट ॥ १४२ ॥

देवट ॥ अरट । थरट । करटः । कर्वटम् । शपटम् । कङ्कट । कर्पटम् । चपटः । चमटः । कमट । कधट । कर्कट । मर्कटः । कक्खटः । तरट । करट । सरट । भरटः । वरट ॥

तृकृकृपिकम्पिकृपिभ्य कीटः ॥ १५१ ॥

तिरीटम् । किरीटम् । कृपीटम् । कम्पीटम् । कृपीटम् ॥

गजदवभभ्य उट उडश्च ॥ १५३ ॥

गरुटः ॥ गरुडः । जरुटः । जरुड । दरुटः । दरुड । भरुटः । वरुडः । भरुट । भरुडः ॥

वनिकणिकाश्युषिभ्यष्ठ ॥ १६२ ॥

वण्ठः ॥ कण्ठः । काष्ठम् । ओष्ठः ॥

पीविशिकुणिपृषिभ्यः कित् ॥ १६३ ॥

पीठम् ॥ विष्ठा । कुष्ठः । पृष्ठः ॥

कुषेर्वा ॥ १६४ ॥

ठः स च वा कित् ॥ कुष्ठम् । कोष्ठ ॥

मृजृशाकम्यमिरमिरपिभ्योऽठ. ॥ १६७ ॥

मरठ. ॥ जरठः । शरठः । कमठ । अमठः । रमठः । रपठः ॥

पञ्चमात् डः ॥ १६८ ॥

धातो. ॥ पण्डः । बाहुलकात्सत्वाभावः । चण्ड. । पण्डः । मण्डः । शण्ड । दण्ड । रण्ड ॥

कण्यणिखनिभ्यो णिद्वा ॥ १६९ ॥

ड. ॥ काण्डम् । कण्ड । आण्डः । अण्डः । खाण्ड । खण्ड ॥

शमिषणिभ्यां ढ ॥ १७१ ॥

शण्ढः ॥ षण्ढः । बाहुलकात्सत्वाभाव ॥

घृवीह्वाशुष्युषितृपिकृष्यर्तिभ्य कित् ॥ १८३ ॥

णः ॥ घृणा । वीणा । हूणः । शुष्ण । उष्णः । तृष्णा । कृष्ण. । ऋणम् ॥

रुच्च ॥ १८५ ॥

गः ॥ पूग॰ । मुद्ग ॥

भृदृभ्यां नोऽन्तश्च ॥ ९४ ॥

किद् गः ॥ भृङ्ग । दृङ्गः ॥

शृङ्गशार्ङ्गादय ॥ ९६ ॥

शृणातेर्ह्रस्वो नोऽन्तश्च ॥ शृङ्गम् । वृद्धिः । शार्ङ्गम् । आदिग्रहणात् हृग् हरणे, हार्ग॰ ॥

तडेराग ॥ ९७ ॥

तडागम् ॥

पतितमितृपकशल्यादेरङ्ग ॥ ९८ ॥

पतङ्ग. ॥ तमङ्गः । तरङ्ग । परङ्ग । करङ्ग॰ । शरङ्ग । ल्यङ्ग॰ । आदिग्रहणादन्येभ्योऽपि ॥

विडिविलिकुरिमृदिपिशिभ्य कित् ॥ १०१ ॥

अङ्ग॰ । विडङ्गः । विलङ्ग. । कुरङ्गः । मृदङ्ग । पिशङ्ग ॥

स्थार्तिजनिभ्यो घ ॥ १०९ ॥

स्थाघ ॥ अर्घ । जङ्घा ॥

कृपृसमिण्भ्यश्चट् दीर्घश्च ॥ ११२ ॥

कूच ॥ कूची । पूच॰ । समीच ॥

दिव्यविश्रुकुकर्विशकिकङ्किकृपिचपिचमिकस्ये-
धिकर्किमार्किकक्खितृकस्तृभृवृभ्योऽट ॥ १४२ ॥

देवट. ॥ अवट॰ । श्रवट । कवट. । कर्वटम् । शकटम् । कङ्कट । कर्पटम् । चपट । चपट । चमट । पधट । कर्कट॰ । मर्कट॰ ककखट । तरट । करट॰ । सरट॰ । भरट॰ । वरट ॥

तृकृकृपिकम्पिकृपिभ्य कीट ॥ १५१ ॥

एते किच्प्रत्ययान्ता निपात्यन्ते ॥ पूङो ह्रस्वश्च । पुतः । पीङस्तोऽन्तो ह्रस्वश्च । पित्तम् । निपूर्वान्मिनोतेर्मित् च । निमित्तम् । उभेर्लुक् च । उत । शके: शुचेर्वा शुकभावश्च । शुक्तं कल्कजातिः । ताडयते स्तक्रतेस्तिजेर्वा तिक् च । तिक्त । लीयते पोऽन्तो ह्रस्वश्च । लिप्तम् । सूपूर्वाद्रमेः सोर्दीर्घश्च । सूरत । हुर्च्छे: मुश्च धात्वादि । मुहूर्त । आदिग्रहणादयुतादयः ॥

## दृपृभृमृशीयजिखलिवलिपर्विपच्यमिनमितमिहर्षिकङ्किभ्योऽत ॥ २०७ ॥

दरत ॥ परत: । भरत: । मरत । शयत । यजत: । खलतः । वलतः । पर्वतः । पचतः । अमत । नमतः । तमतः । दर्शतः । हर्षतः । कङ्कत: ॥

## पृषिरञ्जिसिकिकालाद्युभ्य. कित् ॥ २०८ ॥

अतः ॥ पृषतः । रजतम् । सिकताः । कत: । लता । व्रतम् ॥

## हृश्यारुहिशोणिपलिभ्य इत ॥ २१० ॥

हरितः ॥ श्येतः । रोहितः । लत्वे, लोहितः । लोहितम् । शोणितम् । पलितम् ॥

## क्रुशिपिशिपृषिकुषिकुस्युचिभ्य कित् ॥ ११२ ॥

इत ॥ क्रुशितम् । पिशितम् । पृषितम् । कुषितम् । कुसितम् । उचितम् ॥

## कवेरोतः प् च ॥ ११७ ॥

कपोतः ॥

## तृजिभूवदिवहिवसिभास्यदिसाधिमदिगडिगण्डिमण्डिनन्दिरेविभ्य. ॥ २२१ ॥

णः ॥ स्थूणा । क्ष्णम् । तूणः ॥

**भ्रणतृणगुणकार्कणतीक्ष्णश्लक्ष्णाभीक्ष्णादयः ॥१८६॥**

एते णान्ता निपात्यन्ते ॥ भृणो भ्रू च । भ्रूण । तरतेंस्तश्च । तृणम् । गायतेर्गमेर्गृणातेर्वा गुभावश्च । गुणः । कृणो वृद्धिः कोऽन्तश्च । कार्कण । निजेर्दीर्घ सश्च परादि । तीक्ष्णम् । श्लिषेःसोऽन्तोऽवेव । श्लक्ष्णम् । अभिपूर्वादिषेः किच्च सोऽन्त । अभीक्ष्णम् । आदिग्रहणादन्येऽपि ॥

**कॄगॄपॄकुपिवृषिभ्य कित् ॥ १८८ ॥**

अणः ॥ किरण । गिरण । पुरण । कुपणः । वृषणः ॥

**धृषिवहेरिच्चोपान्त्यस्य ॥ १८९ ॥**

किदण ॥ धिषण । धिषणा । विहण. ॥

**चिक्कणकुक्कणकुकणकुङ्कणत्रवणोल्वणोरणलवणवड्क्षणादय ॥ १९० ॥**

एते किदणान्ता निपात्यन्ते । चिनोतेश्चिक्क च ॥ चिक्कण. । कुकिकुगो कोन्तश्च । कुक्कण । कृकण. । कुरु स्वरात्कोऽन्तश्च । कुङ्कणा' । त्रपेरश्च । त्रवण' । वलेर्वम्योत् वोऽन्तश्च । उल्वण. । अर्तेरर् च । उरण । लीयते लियते स्वदतेर्वा स्वादेशश्च । लवणम् । वक्षे स परादिर्नलोपाभावश्च । वड्क्षण. । आदिशब्दाज्ज्योतिरिङ्गणादय ॥

**द्रुहृवृहिदक्षिभ्य इण ॥ १९४ ॥**

द्रविणम् ॥ हरिण । बर्हिण । दक्षिण ॥

**ऋद्रुहे कित् ॥ १९५ ॥**

इण ॥ इरिणम् । द्रुहिणम् ॥

**पुतपित्तनिमित्तोत्तशुक्कतिक्कलिप्तसूरतमुहूर्तादय ॥२०४॥**

**पथयूथगूथकुथतिथनिथसूरथादय. ॥ २३१ ॥**

थान्ता निपात्यन्ते ॥ पलतेर्ल्लो लुकच । पथः । यौतेर्गुवतेश्च दीर्घः । यूथम् । गूथम् । किरतेः करोतेर्वा कुश्च । कुथ' । तनोतेस्तिप्तेर्वा तिश्च । निथः । तिम्यतेस्तिथः प्रावृट्कालः । नयतेर्ह्रस्वश्च । निथः । सुपूर्वाद्रमेः सोर्दीर्घश्च कित् च । सूरथः । आदिग्रहणान्निरुथादय । रौतेर्दीर्घत्व निपातनात् ॥

**भृशीशपिशमिगमिरमिवन्दिवञ्चिजीविप्राणिभ्योऽथ ॥ २३२ ॥**

भरथः ॥ शयथ. । शपथ. । शमथ' । गमथः । रमथः । वन्दथः । वञ्चथः । जीवथ । प्राणथ ॥

**उपसर्गाद्वस ॥ २३३ ॥**

अथ ॥ आवसथ । उपवसथ' । संवसथ । सुवसथः । निवसथ ॥

**शाशपिमनिकनिभ्यो द ॥ २३७ ॥**

शादः ॥ शब्द । मन्द । कन्द. ॥

**आपोऽप्च ॥ २३८ ॥**

द ॥ अब्दम् ॥

**घृतुकुसुभ्यो नोऽन्तश्च ॥ २४० ॥**

कित् द ॥ घृन्दम् । तुन्दम् । कुन्द. । सुन्दः ॥

**कुसेरिदेदौ ॥ २४१ ॥**

कितौ ॥ कुसिदम् । कुसीदम् ॥

**कल्यलिपुलिकुरिकुणिमणिभ्य इन्दक् ॥ २४६ ॥**

कलिन्दः ॥ अलिन्दः । पुलिन्दः । कुरिन्द. । कुणिन्द । मणिन्दः ॥

**कुपेर्व च वा ॥ २४७ ॥**

दिन्त ॥ आशिषीयेरे । तन्तः । तरन्ती । जयन्त. । भरन्तः । वदन्त' । वहन्त । रसन्त । भामन्त' । ण्यन्तादपि । भामयन्तः । अन्त. । सापन्त । साधयन्त. । मदयन्त' । गडन्त । गडयन्त' । गण्डयन्त । मण्डयन्त. । नन्दयन्तः । रेयन्त' ॥

सीमन्तहेमन्तभदन्तदुष्यन्तादय' ॥ २२२ ॥

अन्तमत्ययान्ता निपात्यन्ते ॥ सिनोते सीम च । सीमन्त । हन्तेर्हिनोतेर्वा हम् च । हेमन्त' । भन्दतेर्नलुश्च च । भदन्त । दुष पोऽन्तश्च । दुष्यन्त । आदिग्रहणादन्येऽपि ॥

शकेरुन्त ॥ २२३ ॥

शकुन्त ॥

कमिपुगार्तिभ्यस्थ ॥ २२५ ॥

कन्था । पोथ. ॥ गाथा । अर्थ ॥

नीनूरमितृतुदिवचिरिचिसिचिशिवहनिपागोपावोद्गाभ्य कित् ॥ २२७ ॥

थ. ॥ नीथम् । सुनीथ । नूथम् । रथ. । तीर्थम् । तुथम् । उक्थम् । रिक्थम् । सिक्थम् । शुथ । हथ । पीथम् । पीथ । गोपीथ. । अवगीथम् । उद्गीथ ॥

न्युद्भ्यां शीङ ॥ २२८ ॥

कित् थ ॥ निशीथ । उच्छीथ ॥

अवभृनिर्ऋसमिण्भ्य ॥ २२९ ॥

कित् थ ॥ अवभृथ । निर्ऋथ. । समिथ ॥

सर्तेर्णित् ॥ २३० ॥

थ ॥ सार्थ ॥

पथयूथगूथकुथतिथनिथसूरथादयः ॥ २३१ ॥

थान्ता निपात्यन्ते ॥ पलतेर्लो लुकच । पथः । यौतेर्गुवतेश्च दीर्घः । यूथम् । गूथम् । फिरतेः करोतेर्वा कुश्च । कुथः । तनोतेस्तिप्रतेर्वा तिश्च । तिथः । तिम्यतेस्तिथः प्राहट्कालः । नयतेर्ह्रस्वश्च । निथः । सुपूर्वाद्रमे' सोर्दीर्घश्च कित् च । सूरथः । आदिग्रहणाम्निरुथादय । रौतेर्दीर्घत्वं निपातनात् ॥

भृगीशापिशमिगमिरमिवन्दिवञ्चिजीविप्राणि-भ्योऽथ ॥ २३२ ॥

भरथः ॥ शयथ' । शपथः । शमथः । गमथः । रमथ. । वन्दथः । वञ्चथः । जीवथ । प्राणथ ॥

उपसर्गाद्वसः ॥ २३३ ॥

अथ ॥ आवसथ । उपवसथः । संवसथ । सुवसथः । निवसथ ॥

शाशपिमनिकनिभ्यो दः ॥ २३७ ॥

शादः ॥ शब्द । मन्दः । कन्द' ॥

आपोऽप्च ॥ २३८ ॥

द ॥ अब्दम ॥

घृतुकुसुभ्यो नोऽन्तश्च ॥ २४० ॥

कित् दः ॥ घन्दम । तुन्दम । कुन्द' । सुन्द' ॥

कुसेरिदेदौ ॥ २४१ ॥

कितौ ॥ कुसिदम् । कुसीदम् ॥

कल्यलिपुलिकुरिकुणिमणिभ्य इन्दक् ॥ २४६ ॥

कलिन्दः ॥ अलिन्दः । पुलिन्दः । कुरिन्दः । कुणिन्द' । मणिन्दः ॥

कुपेर्व च वा ॥ २४७ ॥

इन्दक् ॥ कुपिन्दः ।कुविन्दः ॥

## प्याधापन्यनिस्वदिस्वपिवस्यज्यतिसिविभ्यो न ॥२५

प्यानः ॥ धाना । पन्नम् । अन्नम् । स्वन्नम् । स्वप्नः । वन्नम् सेनः । अत्न. । स्योनम् ॥

## पसेर्णित् ॥ २५९ ॥

न ॥ साम्ना ॥

## रसेर्वा ॥ २६० ॥

नो णित् ॥ रास्ना । रस्नम् । रस्ना । रस्न. ॥

## जीणूशीदीबुध्यनिमीभ्य कित् ॥ २६१ ॥

न ॥ जिन । इन । शीन । दीन । वुन्न । ऊनम् । मीन. ॥

## दिननग्नफेनचिह्नब्रध्नधेनस्तेनच्यौक्नादय ॥ २६८ ॥

नमत्यया ता निपात्यन्ते ॥ दीव्यते किल्लुक् च । दिनम् । नञ्पूर्वात्सेर्गोऽन्तो धातोर्लुक् च । नग्न । फणे फले स्फायेर्वा फेभावश्च । फेन । चहरिश्चोपान्त्यस्य । चिह्नम् । वन्धेर्ब्रध् च । ब्रध्नः धयतेररन च । नेन । नेना । स्त्यायें स्ते च । स्तेन । च्यवतेर्वृद्धि कोऽन्तश्च । च्यौक्नम् । आदिशब्दादन्येपि ॥

## यवसिरसिरुचिजिमस्जिदेविस्यन्दिचन्दिमन्दिम-पिडमदिदहिवह्यादेरन ॥ २६९ ॥

यवना ॥ यवनम् । असन । रसना । रोचना । रोचनः विरोचन । जयनम् । मज्जनम् । देवन । स्यन्दन. । चन्दनम् मन्दनम् । मण्डनम् । मदन । दहन । वहनम् । आदिग्रहणात् पचन पवन इत्यादयो भवन्ति ॥

अशो रश्चादौ ॥ २७० ॥

अनः ॥ रशना ॥

उन्देर्नलुक् च ॥ २७१ ॥

अनः ॥ ओदनः ॥

हन्तेर्घतजघौ च ॥ २७२ ॥

अनः ॥ घतनः । जघनम् ॥

श्याकठिखलिनल्यविकुण्डिभ्य इन. ॥ २८२ ॥

श्येनः ॥ कठिनम् । खलिनम् । नलिनम् । अविनम् । कुण्डिनः । कुण्डिनम् ॥

विपिनाजिनादय. ॥ २८४ ॥

किदिनान्ता निपात्यन्ते । वपेर्वेर्वेरा इत्वोपान्त्यस्य । विपिनम् । अजेर्वीभावाभावश्च । अजिनम् । आदिग्रहणादन्येऽपि ॥

यम्यजिशक्यर्जिशीयजितृभ्य उनः ॥ २८८ ॥

यमुना । वयुनम् । वयुनः । शकुनः । अर्जुन. । अर्जुनी । अर्जुनम् । शयुनः । यजुना । तरुण । लत्वे, तलुनः ॥

कृत्यशौभ्यां स्नक् ॥ २९४ ॥

कृत्स्नम् ॥ अश्णम् ॥

भापाचणिचमिविपिसृपतृशोतल्यलिशमिरमिवपिभ्य प ॥ २९६ ॥

भाप. ॥ पापम् । चण्पा । चम्पा । वप्पः । निवेप्पः । सर्प । पर्पः । तर्प. । शेप. । तल्पम् । अल्पम् । शम्पा । रम्पा । वप्पः ॥

पुसुकुरुतुच्युस्त्वादेरुच्च ॥ २९७ ॥

इन्दच् ॥ कुपिन्दः । कुविन्दः ॥

प्याधापन्यलिस्वदिस्वपिवस्यज्यतिसिविभ्यो नः ॥२५८॥

प्यानः ॥ धाना । पन्नम् । अन्नम् । स्वन्नम् । स्वप्नः । वस्नम् । येनः । अत्नः । स्योनम् ॥

पसेर्णित् ॥ २५९ ॥

न ॥ सास्ना ॥

रसेर्वा ॥ २६० ॥

नो णित् ॥ रास्ना । रस्नम् । रस्ना । रस्नः ॥

जीणशीदीबुध्यविमीभ्यः कित् ॥ २६१ ॥

न ॥ जिनः । इनः । शीनः । दीनः । बुध्नः । ऊनम् । मीनः ॥

दिननग्नफेनचिह्नब्रध्नधेनस्तेनच्यौक्नादयः ॥ २६८ ॥

नप्रत्ययान्ता निपात्यन्ते ॥ दीव्यतेः किल्लुक् च । दिनम् । नञ्पूर्वाद्वसेर्गोऽन्तो धातोर्लुक् च । नग्नः । फणेः फले. स्फायेर्वा फेभावश्च । फेनः । चहगिश्चोपान्त्यस्य । चिह्नम् । वध्नेर्ब्रध् च । ब्रध्नः । धयतेरत्व च । धेनः । धेना । स्त्यायेःस्ते च । स्तेनः । च्यवतेर्दीर्घ ङ्कि कोऽन्तश्च । च्यौक्नम् । आदिशब्दादन्यपि ॥

यवसिरसिरुचिजिमस्जिदेविस्यन्दिचन्दिमन्दिम-
ण्डिमदिदहिवह्यादेरन ॥ २६९ ॥

यवना ॥ यवनम् । असनः । रसना । रोचना । रोचनः । विरोचनः । जयनम् । मज्जनम् । देवनः । स्यन्दनः । चन्दनम् । मन्दनम् । मण्डनम् । मदनः । दहनः । वहनम् । आदिग्रहणात् पचनः पवनः इत्यादयो भवन्ति ॥

अशो रश्चादौ ॥ २७० ॥

अनः ॥ रशना ॥

उन्देर्नलुक् च ॥ २७१ ॥

अन. ॥ ओदनः ॥

हन्तेर्घतजघौ च ॥ २७२ ॥

अनः ॥ घतनः । जघनम् ॥

श्याकठिखलिनल्यविकुण्डिभ्य इन. ॥ २८२ ॥

श्येनः ॥ कठिनम् । खलिनम् । नलिनम् । अविनम् । कुण्डिन' । कुण्डिनम् ॥

विपिनाजिनादय ॥ २८४ ॥

किदिनान्ता निपात्यन्ते । वपेर्वेपेर्वा इत्त्वोपान्त्यस्य । विपिनम् । भजेर्वीभावाभावश्च । अजिनम् । आदिग्रहणादन्येऽपि ॥

यम्यजिशक्यर्जिशीयजितृभ्य उन' ॥ २८८ ॥

यमुना । यमुनम् । यमुनः । शकुनः । अर्जुनः । अर्जुनी । अर्जुनम् । शयुनः । यजुना । तरुण । लत्वे, तलुनः ॥

कृत्यगोभ्यां स्नक् ॥ २९४ ॥

कृत्स्नम् ॥ अक्ष्णम् ॥

भापाचणिचमिविपिसृपतृशीतल्यलिशमिरमित्रपिभ्य प. ॥ २९६ ॥

भापः ॥ पापम् । त्वण्पा । चम्पा । वप्प' । निरेप्प । सर्प । पर्प । तर्पः । शेप. । तल्पम् । अल्पम् । शम्पा । रम्पा । त्रप्प. ॥

पुस ष्युस्त्व.ए० ॥ २९७ ॥

पः ॥ यूपः । गूपः । कूप । रूपम् । तूपः । न्यूपः । स्नूपः । आदिशब्दादन्येऽपि ॥

## कृशृस्तृभ्य ऊर् चान्तस्य ॥ २९८ ॥

प ॥ शूर्पम् । शूर्पं । शूर्पः ॥

## शदिवाधिरजनिहने पः च ॥ २९९ ॥

पः ॥ शष्पम् । बाष्प । रप्पः । रप्पम् । हप्पः ॥

## पम्पाशिल्पादय ॥ ३०० ॥

पान्ता निपात्यन्ते । पानेर्माऽन्तो ह्रस्वश्च । पम्पा । शील्यते शल्यते शीलेर्वा शिल्यादेशश्च । शिल्पम् । आदिशब्दादन्येऽपि ॥

## नियो वा ॥ ३०२ ॥

प पित् ॥ नीप । नेप ॥

## भुजिकुतिकुटिविटिकुणिकुप्युपिभ्य कित् ॥ ३०५ ॥

अप ॥ भुजप । कुतपः । कुटप । विटप । कुणपः । कुपपः । उपप ॥

## विष्टपोलपवातपादय ॥ ३०७ ॥

किन्पप्रत्ययान्ता निपात्यन्ते ॥ विषेस्तोऽन्तश्च । विष्टपम् । वलेरुल् च । उलपम् । वातेस्तोऽन्तश्च । वातप । आदिशब्दादन्येऽपि ॥

## कलिगलेरस्योच्च ॥ ३१५ ॥

फ ॥ कुल्फः । गुल्फ ॥

## शम्यमेर्णिद्वा ॥ ३१८ ॥

ब ॥ शम्ब । शाम्बः । अम्बा । आम्ब ॥

## शल्यलेरुच्चात ॥ ३१९ ॥

ब ॥ शुल्बम् । उल्बम् ॥

तुम्बस्तम्बादय. ॥ ३२० ॥

ताम्यतेरत उत्व च ॥ तुम्बम् । स्तम्भेर्लुक् च । स्तम्ब' । आदिशब्दादन्येऽपि ॥

गर्दरमिहनिजन्यर्तिदलिभ्यो भः ॥ ३२७ ॥

गर्भः ॥ दर्भः । रम्भा । हम्भा । जम्भ. । जम्भा । अर्भः । दल्भ ॥

कृशगृशलिकलिकडिगर्दिरासिरमिवडिवल्लेरभ.॥३२९॥

करभ' ॥ शरभ । गरभ । शलभः । कलभः । कडभः । गर्दभः। रासभः । रमभ । वडभी । लत्व, वलभी । वल्लभ. ॥

ऋषिवृषिलुसिभ्य कित् ॥ ३३१ ॥

भभ. ॥ ऋषभः । वृषभ । लुसि. सौत्र' । लुसभ ॥

काकुसिभ्यां कुम्भ ॥ ३३७ ॥

कै शब्दे ॥ कुम्भः । कुसुम्भश्च ॥

अर्तीरिस्तुसुहुसृघृधृशृक्षियक्षिभावाव्याधापायावलिपदिनीभ्यो म ॥ ३३८ ॥

अर्म' ॥ ईर्मम् । स्तोमः । सोम । होम । सर्मः । समम् । घर्म'। धर्म । शर्मम् । क्षेमम् । यक्ष्मः । भामः । भामा । वाम' । व्याम' । धामम । पामा । याम' । वल्म । पद्मम् । नेम ॥

ग्रसिहाग्भ्या ग्राजिह्मौ च ॥ ३३९ ॥

मः ॥ ग्राम । जिह्म ॥

त्रिलिभिलिसिधीन्धिधूसूश्याध्यारुसिविशुषिमुषीषिसुहियुधिदसिभ्य कित् ॥ ३४० ॥

। भिल्मम् । सिध्मम् । इध्मम् । धूमः

घूमम् । स्याम. । ध्याम' । रुमा । स्यूम.। स्यूनम् । शुष्मम्। छु
ड्म.। सुष्माः । युष्म' । दस्म.॥

क्षुहिभ्यां वा ॥ ३४१ ॥

म' स च कित् ॥ क्षुमा । क्षोमम । हिमम । हमम ॥

सेरी च वा ॥ ३४३ ॥

किन्मः ॥ सीम' । सिम ॥

भिय षोऽन्तश्च वा ॥ ३४४ ॥

किन्म. ॥ भीष्म । भीम ॥

तिजियुजेर्ग् च ॥ ३४५ ॥

किन्म ॥ तिग्मम् । युग्मम् ॥

रुक्मग्रीष्मकूर्मसूर्मजाल्मगुल्मघ्रोमपरिस्तोम

क्ष्मादय ॥ ३४६ ॥

निपात्यन्ते ॥ रोचते ष च । रुक्मम् । ग्रसेर्ग्रीष् च । ग्रीष्म
कुरतेर्दीर्घश्च । कूर्म । षूङ् प्रेरणे इत्यस्माद्रोऽन्तश्च । सूर्मी । ज
घात्ये, दीर्घश्च । जाल्म. । गुपच् व्याकुलत्वे लश्च । गुल्म । गुल्म
जिघ्रतेरोत्व च । घ्रोम । परिपूर्वात् स्तौतेः पत्वाभावो गुणश्च । प
स्तोम. । सूचयते रश्च षोऽन्तश्च । सूक्ष्म ॥

सृपृप्रथिचरिकडिकर्देरम ॥ ३४७ ॥

सरमा। परम । प्रथम । चरम' । कडमः । कर्दे, कर्दम.। कर्दम

अवेर्ध् च ॥

अम ॥ अधम

उद्दटिकुल्यर्ति

उद्

कुङ्कुमा । कुङ्कुमम् ॥

कुथिगुधेरूमः ॥ ३५३ ॥

कोथूमः ॥ गोधूम. ॥

स्थाछामासासूमन्यनिकनिषसिपलिकलिशलिशकीर्ष्यिसहिवन्धिभ्यो य ॥ ३५७ ॥

स्थायः ॥ स्थाया । छाया । माया । सायम् । सव्यः । मन्य । अन्य. । कन्या । सस्यम् । पल्यः । कल्य । शल्यम् । शक्यम् । ईर्ष्या । सह्यः । वन्या ॥

ऋशिजनिपुणिकृतिभ्य. कित् ॥ ३६१ ॥

यः ॥ ऋशू गतौ स्तुतौ च । ऋश्यः । जन्यम् । जाया । ये नवा इत्यात्वम् । पुण्यम् । कृत्या ॥

शिक्यास्याढ्यमध्यविन्ध्यधिष्ण्याघ्न्यहर्म्यसत्यनित्यादयः ॥ ३६४ ॥

श्यतेरिकश्चान्तः ॥ शिक्यम् । अस्यतेर्दीर्घश्च । आस्यम् । आङ्पूर्वाद् ढौकतेर्डिच्च । आढ्यः । मव् बन्धने ध् च । मध्यम् । विधते. स्वरान्नोऽन्तश्च । विन्ध्यः । धिषेर्णोऽन्तो धिष् च । धिष्ण्यम् । धिष्ण्या । नञ्पूर्वाद्धन्तेरुपान्त्यलोपश्च । अघ्न्य' । हरतेर्मोऽन्तश्च । हर्म्यम् । अस्ते सत् च । सत्यम् । निपूर्वाद्यमेस्तोऽन्तो धातुलुक् च । नित्यम् । आदिशब्दादन्येऽपि ॥

कुगुवलिमलिकणितन्याम्यक्षेरय ॥ ३६५ ॥

कवयः ॥ गवयः । वलय. । मलयः । कणय । तनय । आमय । अक्षय' ॥

[illegible] ॥ ३७३ ॥

अराग्य' ॥ दशाग्यः । शृङ्गाग्य. । स्फूहयाग्य । मदाग्यः ॥

धाधाजिशूरमियाज्यर्तेरन्यः ॥ ३७९ ॥

धान्यम् ॥ राजन्य' । शरण्य' । रमण्यम् । याजन्यः । अरण्यम् ॥

हिरण्यपर्जन्यादय ॥ ३८० ॥

निपात्यन्ते ॥ हरतेरिधान । हिरण्यम् । परिपूर्वस्य पृष् संचने इत्यस्योपसर्गान्तलोपो धातोश्च ज मध्यरनादेन. । गर्जतेर्वा गस्य प पर्जन्य' । आदिग्रहणादन्येऽपि ॥

वदिसहिभ्यामान्य ॥ ३८१ ॥

वदान्य ॥ महान्य ॥

वृङ ण्य ॥ ३८२ ॥

वरेण्य ॥

मदे स्य ॥ ३८३ ॥

मत्स्य' ॥

भीवृधिरुधिवज्यगिरमिवमिवपिजपिशाकिस्फायिवन्दीन्दिपदिमदिमन्दिचन्दिदसिघसिनसिहस्यसिवासिदहिसहिभ्यो र ॥ ३८७ ॥

मेर ॥ ऊरेे, भेल' । वध्र । रोध्र । वज्रम् । अग्र. । रम्र । वम्र. । वप्र । जप्र । शक्र । स्फारम् । वन्द्र । वन्द्रम् । इन्द्र । पद्रम् । मद्र । मद्रम् । मन्द्रम् । चन्द्र । दस्र । घस्र । नस्र । हस्र. । हस्रम् । सहस्रम् । अस्रम् । वास्र । वास्रा । दह्र । सह्र' ॥

ऋज्यजितञ्चिवञ्चिरिपिसृपितृपिदृपिचुपिक्षिपिक्षुपिक्षुदिमुदिरुदिच्छिदिभिदिखिदुन्दिदम्भिशुभ्युम्भिदशिचिसिवहिविसिवसिशुचिसिधिगृधिवीन्धिश्वित..

ऋतिनीशीसुसूभ्य कित् ॥ ३८८ ॥

रः ॥ ऋज्रः । वीर. । तक्रम् । वक्र. । न्यङ्क्वादित्वात्कत्वम् । रिप्रम् । सृप्रम् । सृप्रा । तृप्रम् । दृप्रम् । क्षुप्रम् । क्षिप्रम् । क्षुपि सादने, सौत्रः । क्षुप्रम् । क्षुद्रम् । क्षुद्रा । क्षुद्र' । मुद्रा । रुद्र' । छिद्रम् । भिद्रम् । खिद्रम् । उद्र ॥ समुन्दन्ति आर्द्रीभवन्ति वेलाकाले नद्यो-ऽस्मादिति समुद्रः। भीमादित्वादपादाने। दभ्रः । शुभ्रः । उभ्रः । दभ्रः। चिरम् । सिरा । उग्र । विस्रम् । उस्र । बाहुलकात्षत्वं न । उस्रा । शुक्र । शुक्रम् । लत्वे, शुक्लः । न्यङ्क्वादित्वात्कत्वम् । सिध्रः । गृध्रः । वीध्र । स्विन्नम् । पूत्र । भूत्रम् । नीरम् । शीरः । सुरः । सुरा । भूरः ॥

चिजिशुसिमितम्यम्यर्देर्दार्घश्च ॥ ३९२ ॥

र ॥ चीरम् । जीर । जीरम् । लत्वे, जील' । शूर' । सीरम् । मीर' । ताम्र । आम्र । आर्द्रम् ॥

कृते क्रूकृच्छ्रौ च ॥ ३९५ ॥

र ॥ क्रूरम् । कृच्छ्रम् ॥

खुरक्षुरदूरगौरविप्रकुप्रश्वभ्राभ्रधूम्रान्ध्ररन्ध्रशिलिन्ध्रौड्रपुण्ड्रतीव्रनीव्रशीघ्रोग्रतुम्रभुम्रनिद्रातन्द्रासान्द्रगुन्द्रारिज्ञादय ॥ ३९६ ॥

खुरक्षुरौ रलोपो गुणाभावश्च ॥ खुर । क्षुर । दुरपूर्वादिणो लुक् च । दूरम् । गवतेर्डिश्च । गौर । विपूर्वात्पातेर्डुम्र च । विप्र' । कुपेरादे. षत्व च । कुप्रम् । श्वयतेरकारो भोऽन्तश्च श्वभ्रम् । आप्नोतेरभादेशश्च । अभ्रम् । धूनोतो मोऽन्तश्च । धूम्र । अधुड् गतौ धश्च । अन्ध्रः । रधे स्वरान्नोऽन्तश्च । रन्ध्रम् । इन्धेः शिलधादि । शिलिन्ध्रम् । औणेर्डश्च । औड्र. । पुणे स्वरान्नो-

ऽन्तौ ह्रस्वश्च । पुण्ड्र । पुण्डेर्वा रूपम् । तिजेर्गो दीर्घश्च । तीरतेर्वा । तीव्र । निपो गोऽन्तश्च । नीगोर्वा । नीव्रम् । इन्धेः ईत्वं धन्लोपो यथान्तः । धीध्र । उषेर्गोर्वा गः किच्च । उग्र । तुदेर्ग किच्च । तुग्रम् । मुजेर्गः किच्च । मुग्रः । निन्दे निघलोपश्च । निद्रा । ताम्यतेर्दोऽन्तश्च । तन्द्रा । सीन्तेः स्वरान्नोऽन्तो ह्रस्वश्च । सान्द्रम् । गुदेः स्वरोन्नोऽन्तश्च । गुन्द्रा । रातेरौर्वा किदुपान्त्यस्येच्च । रिज । आदिशब्दादन्येऽपि ॥

ऋच्छिचटिवटिकुटिकठिवठिमठ्यडिशीकृशीभृकदिवदिकन्दिमन्दिसुन्दिमन्थिमञ्जिपञ्जिपिञ्जिकमिसमिचमिवमिभ्रम्यमिदेविवासिकास्यर्तिजीविवर्धिकुशुवोरर ॥ ३९७ ॥

ऋच्छरः ॥ कच्छरा । चटर । वटर । कोटरम् । बाहुलकाद् गुण । कठर । वठर । मठर । अडर । शीकर । शीभर । कदि सौत्र । कदर । वदरी । कन्दर । मन्दर । सुन्दि सौत्र शोभायाम् । सुन्दर । मन्थरः । मञ्जिपञ्जी सौत्रौ । मञ्जरी । गौरादित्वान्ङी । पञ्जरः । पिञ्जर । कमर । समर । चमर । भ्रमर । अमर । देवर । वासर । कासर । अरर । जीवर । वर्धर । बर्बरी । कवर । कबरी । गवर । दवर ॥

मृद्युन्दिपिठिकुरिकुहिभ्य कित् ॥ ३९९ ॥
मृदर ॥ उदरम् । पिठरम् । कुरर । कुहरम् ॥

अग्यङ्गिमदिमन्दिकडिकसिकासिमृजिकञ्जिकलिमलिकचिभ्य आर ॥ ४०५ ॥
अगारम् ॥ अङ्गार । मदार । मन्दार । कडार । कसारः । कासार । मार्जार । कञ्जार । कलार । मलार । कचार ॥

कमेरत उच्च ॥ ४०९ ॥

आरः ॥ कुमारः ॥

द्वारशृङ्गारभृङ्गारकह्लारकान्तारकेदारखारडादय. ॥ ४११ ॥

उम्भेर्द्वादेशश्च ॥ द्वारम् । श्रयते' शृङ्गश्च । शृङ्गार. । भृगो भृङ्ग् च । भृङ्गार' । कलेर्हश्च स्वरात्परः । कह्लार । कमेस्तोऽन्तो दीर्घश्च । कान्तारम् । कठे सौत्रस्यात एच । केदार । खनेर्डिच । खारी । डो ड्यर्थः । आदिशब्दादन्येपि ॥

मदिमन्दिचन्दिपदिखदिसहिवहिकुस्तभ्य इर. ॥४१२॥

मदिरा ॥ मन्दिरम् । चन्दिर'। चन्दिरम् । पदिर । खदिर. । सहिरः । वहिर. । कविर । मदिरम् । लत्वे, सलिलम् ॥

शवशशोरिच्चात' ॥ ४१३ ॥

इर ॥ शिविरम् । शिशिरम् ॥

श्रन्थेः शिथ् च ॥ ४१४ ॥

इरः ॥ शिथिरम् । लत्वे, शिथिलम् ॥

शुषीषिवन्धिरुधिरुचिमुचिमुहिमिहितिमिमुदिखिदिच्छिदिभिदिस्थाभ्य कित् ॥ ४१६ ॥

इरः ॥ शुषिरम् । इषिरम् । इषिर । बधिर. । रुधिरम् । रुचिर । मुचिर । मुहिर । मुदिरम् । मिहिर । मिहिरम् । तिमिरम् । मुदिरः । खिदिर' । छिदिर । छिदिरम् । भिदिर । स्थिर ॥

स्थविरपिठिरस्फिराजिरादय' ॥ ११७ ॥

तिष्ठतेर्वोऽन्तो ह्रस्वश्च ॥ स्थविरः । पचेरत इत्वम् ठश्च । पिठरम् । पिठेर्वा रूपम् । स्फिर । अजेर्वीभावाभावश्च । अजि-

रम् । आदिग्रहणादन्येऽपि ॥

कृशपपृगृमञ्जिकुटिकटिपटिकण्डिशौण्डिहिंसि-भ्य ईर ॥ ४१८ ॥

कृशीरः ॥ शरीरम् । परीरम् । पवीरम् । मञ्जीरम् । कुटीरम् । कोटीरम् । बाहुलकात्पक्षे गुणः । कटीरम् । पटीरः । पटीरम् । कण्डीरम् । शौण्डीरः । हिंसीरः ॥

घसिवशिपुटिकुरिकुलिकाभ्य कित् ॥ ४१९ ॥

ईर ॥ क्षीरम् । उशीरम् । पुटीर । कुरीरम् । कुरीर । कुलीर । कीर ॥

वाश्यसिवासिमसिमथ्युन्दिमन्दिचतिचङ्कथङ्कि-कर्बिचकिचन्धिभ्य उर ॥ ४२३ ॥

वाशुरः ॥ वाशुरा । असुर । वासुरा । मसुरा । मथुरा । कुन्दुर । मन्दुरा । चतुर । चङ्कुर । अङ्कुरः । बहुलवचनाद् घञ्युपसर्गस्येति दीर्घे । अङ्कुर । कर्बुर । चकुरः । चन्धुर ॥

श्वशुरकुकुन्दुरदर्दुरनिचुरप्रचुरचिकुरकुक्कुरकुकुर-कुर्कुरशकुरनूपुरनिष्ठुरविधुरमङ्गुरवागुरादय ॥ ४२६ ॥

आशुपूर्वात् शुपूर्वाद्वा अश्नातेरन्तेर्वाऽऽकारलोपश्च । श्वशुरः । कुपूर्वात्स्कुन्दे सलुक् च । कुकुन्दुर । दृणातेर्दोऽन्तश्च । दर्दुरः । निपूर्वात्प्रपूर्वाच्चरतेश्चिनोतेर्वा डिच्च । निचुर । लत्व, निचुलः । प्रचुरम् । चकेरित्वारय । चिकुरम् । चिकुरः । कुकः कोऽन्तो वा । कुकुर । कुक्कुर । किर कुर कोऽन्तश्च । कुर्कुर । शृणो ऋण कोऽन्तश्च । शकुर । णू स्तवने पोऽन्तश्च । नूपुरः । निपूर्वात् तिष्ठतेः, निष्ठुर । व्यथेर्विध च । विधुर । अपादाने उर । मदियात्योर्गोन्तश्च । मद्गुर । वागुरा । आदिग्रहणादन्यनेऽपि । मधुरः इत्यादि ॥

मीमसिपशिखटिखडिखर्जिकर्जिसर्जिकृपिवर्ष्यर्थमण्डिभ्य उरः ॥ ४२७ ॥

मयूरः ॥ मसूरः । पशुरः । खटूरः । खडूरः । खर्जूरः । कर्जूरः । सर्जूरः । कर्पूरः । वल्लूरः । मण्डूरः ॥

सिन्दूरकच्चूरपत्तूरधुत्तूरादयः ॥ ४३० ॥

स्यन्देः सिन्दु च ॥ सिन्दूरम् । कचेर्दीर्घोऽन्तश्च । कच्चूरः । पतेस्तोऽन्तश्च । पत्तूरम् । धुर्वो हिंसार्थाऽन्तश्च । धुत्तूरः । आदिशब्दादन्येऽपि ॥

कुगुपतिकथिकुथिकठिकुठिकुटिगडिगुडिमुदिमूलिदशिभ्य केरः ॥ ४३१ ॥

कुबेरः ॥ गुपेरम् । पतेरः । कथेरः । कुथेरः । कठेरः । कुठेरः । कुटेरः । गडेरः । गुडेरः । मुदेरः । मूलेरः । गुपेरम् । दशेरः ॥

कठिचकिसहिभ्य ओरः ॥ ४३३ ॥

कठोरः ॥ चकोरः । सहोरः ॥

कोरचोरमोरकिशोरघोरहोरागौरादयः ॥ ४३४ ॥

कुरतेश्चुरेर्मुरेर्घुरतेश्च दित् ॥ कोरः । चोरः । मोरः । कशेरीको-पान्त्यस्य । किशोरः । हन्तेर्डित् घश्च । घोरम् । ह्वलतेर्डित् । होरा । ददातेर्दैतेर्वा, गौरः । आदिग्रहणादन्येऽपि ॥

नीमीकृतुचेर्दीर्घश्च ॥ ४४३ ॥

वरट् ॥ नीवरः । मीवरः । कृवर. । तूवर । चीवर ॥

तीवरधीवरपीवरछित्वरछत्वरगह्वरोपह्वरसंपह्वरो-
दुम्बरादय ॥ ४४४ ॥

तिम्यतेस्ती च, तीवतेर्वाऽरे नीवरम्। ध्यायतेर्धी च। धीवर'। प्याय. प्यैटो वा पी च, पीवतेर्वाऽर.। पीवरः । छिनत्तेस्त किच । छित्वर' । छादणिजुपि हस्वश । छत्वर. । छत्वरम् । गृहरयोग । गह्वरम् । उपपूर्वात् ह्नो धादेर्लुंग् च । उपह्वरम् । सपूर्वादपिमेदेश । सपह्वर. । उन्दे किदुम् चान्त । उदुम्बर । आदिशब्दादन्येऽपि ॥

ष्ट्रन् ॥ ४४६ ॥

सर्वधातुभ्य ॥ छादयतीति छत्रम् । छत्री । पात्रम् ॥

सूमूखन्युषिभ्य कित् ॥ ४४९ ॥

ष्ट्रन् ॥ सूत्रम् । मूत्रम् । खात्रम् । उष्ट्र' ॥

स्त्री ॥ ४५० ॥

स्यते मूते स्त्यायते' स्तृणातेर्वा ष्ट्रन् टिच । स्त्री ॥

चिमिदिशसिभ्य कित ॥ ४५४ ॥

त्र' ॥ चित्रम् । मित्रम् । अमित्र । मित्र' । शस्त्रम् ॥

पुत्रादय ॥ ४५५ ॥

पुनाति पवते वा पितॄपूतिमिति पुत्र ॥ आदिग्रहणादन्येऽपि ॥

वृग्नक्षिपचिवच्यमिनमिवमिवपिवधियजिपति-
कडिभ्योऽत्र ॥ ४५६ ॥

वरत्रा ॥ नक्षत्रम् । पचत्रम् । वचत्रम् । अमत्रम् । नमत्रम् ।

वमत्रम् । पवत्रम । वनत्रम् । यजत्रः । पतत्रम् । कदत्रम् । लत्वे, कलत्रम् ॥

वन्धिवहिकटयश्यादिभ्य इत्र ॥ ४५९ ॥

वन्धित्रम् । वहित्रम । कटित्रम । अशित्रम । आदिपदात् लवित्रम अमित्र इत्यादि सिद्धम ॥

भृगवदिचरिभ्यो णित् ॥ ४६० ॥

इत्र ॥ भावित्रम् । गारित्रम् । वादित्रम् । चारित्रम् ॥

शामाश्याशक्यम्व्यमिभ्यो ल ॥ ४६२ ॥

शाला ॥ माला । श्यालः । शक्र । अम्व्लः । अम्लः ॥

शुकशीमूभ्य कित् ॥ ४६३ ॥

शुक्र ॥ शीलम् । मूलम ॥

मृदिकन्दिकुण्डिमण्डिमङ्गिपटिपाटिशकिकेवृदेवृकमियमिशलिकलिपलिगुध्वञ्चिचञ्चिचपिवहिदिहिकुहितृस्पिशितुसिकुस्यनिद्रमेरल ॥ ४६५ ॥

मर्दल । कन्दल । कुण्डलम् । मण्डलम् । मङ्गलम् । पटलम् । पाटल । शकलम् । केवलम् । देवल । कमलम् । यमलम । शललम् । कललम् । पललम् । गवल । धवल । अञ्चल । चञ्चल । चपलः । वहलम् । देहली । कोहल । वाहुलकाद् गुणः । तरल । सरल । पेशल । तोसला । कोसला । अनल । द्रमलम् ॥

नहिलङ्गेर्दीर्घश्च ॥ ४६६ ॥

नाहल ॥ लाङ्गलम् ॥

तृपिवपिकुपिकुशिकुटिवृपिमुसिभ्य कित् ॥ ४६८ ॥

अल. ॥ तूपला । तपलम् । उपल' । वुपल: । कुशल: । कुश लम् । कुटल: । तूपल: । मुसलम् ॥

शमेर्व च वा ॥ ४७० ॥

अत' ॥ शवल । शमलम् ॥

छो डग्गादिर्वा ॥ ४७१ ॥

किदल' ॥ छगल' । छागल' । छलम् ॥

मृजिखन्याहनिभ्यो डित् ॥ ४७२ ॥

अल ॥ मल्म् । खल । खलम् । आहल ॥

मुरलोरलविरलकेरलकपिञ्जलकज्जलेज्जलकोमल-भृमलसिंहलकाहलशूकलपाकलयुगलभगलविदलकु-न्तलोत्पलादय' ॥ ४७४ ॥

मुर्व्युर्व्योर्निलोप. किच्च ॥ मुरला । उरल । विपूर्वाद्रमेर्डिच्च । विरल. । किर केर च । केरला. । कम्पेरिञ्जोऽन्तो नलोपश्च । कपिञ्जल । कपीपोर्जोऽन्तो जश्च । कज्जलम् । इज्जल' । कमेरत ओच्च । कोमलम्। भ्रमेर्भृम च । भृमल । भृमलम् । हिंसेराद्यन्तविपर्ययश्च । सिंहला' । कगेर्हो दीर्घश्च । काहल । काहला । शकेरूच्चास्य । शूकल । पचे पाक च । पाकल । युजे किद्गु ग् च । युगलम् । भातेर्गोऽन्तो ह्रस्वश्च । भगल । भिन्देर्नलोपश्च । विदलम् । कनेरत उत् तोऽन्तश्च। कुन्तला । कुन्तल । उत्पूर्वात्पिबतेर्हस्वश्च। उत्पलम्। आदिशब्दादन्येऽपि ॥

ऋकृमृवृतनितमिचपिचपिकपिकीलिपलिवलिप-ञ्चिमञ्जिगण्डिमण्डिचण्डितण्डिपिण्डिनन्दिनदिशकिभ्य-आल ॥ ४७५ ॥

अराल्म् । कराल्म् । मरालः । वरालः । तनालम् । तमालः । षपालम् । चपालम् । कपिः सौत्रः । कपालम् । कील्लाल्म् । पलालम् । पलालः । पञ्चालः । पञ्चाला । मङ्गालः । गण्डाल । मण्डालः । चण्डालः । तण्डालः । पिण्डाल । नन्दाल । नडालः । शवालः ॥

कुलिपिलिविशिविडिमृणिकुणिपीप्रीभ्य किन् ॥ ४७८ ॥

आलः ॥ कुलाल. । पिलालम् । विशालम् । विडालः । लन्वे, बिलालः । मृणालम् । कुणालः । कुणालम् । पियालः । पियालम् । प्रियाल ॥

पतिकृलुभ्यो णित् ॥ ४७९ ॥

आलः ॥ पातालम् । कारालम । लाताल ॥

चात्वालकङ्कालहिन्तालवेतालजम्बालशब्दालममासालादय. ॥ ४८० ॥

चतेर्वोऽन्तो दीर्घश्च ॥ चात्वाल । कचे स्वरात्नोऽन्त. कश्च । कङ्काल. । हिंसेस्त च । हिन्तालः । वियस्तोऽन्तो गुणश्च । वेतालः । जनेर्बोऽन्तश्च । जम्बालः । शमेर्ङ्पेर्वा शब्दभावश्च । शब्दाल ममेर्मलोपो मासश्चान्त । ममासालः । आदिशब्दादन्येऽपि ॥

कल्यनिमहिद्रमिजटिभटिकुटिचण्डिशण्डितुण्डिपिण्डिभूकुकिभ्य इल ॥ ४८१ ॥

कलिलम् ॥ अनिल । महिला । द्रमिला । जटिलः । भटिल । कुटिलम् । चण्डिल. । शण्डिल । तुण्डिल । पिण्डिलः । भविलः । कोकिल ॥

स्थण्डिलकपिलविचकिलादय

स्थले. स्थण्ड् च । स्थण्डिलम् । कपे

स्नेग्धा । स्नेहा । नग्ना । मज्जा ॥

## लूपूयुधृषिदशिक्षुदिविप्रतिदिविभ्यः कित् ॥ १०१ ॥

लुना । पुवा । युना । धृषा । दृशा । क्षुधा । दिवा । प्रतिदिवा ॥

## श्वन्मातरिश्वन्मूर्धन्प्लीहन्नर्यमन्विश्वप्सन्परिज्वन्महन्नहन्मघवन्नथर्वन्निति ॥ १०२ ॥

श्वयतेर्डुट् च । श्वा । मातरि अन्तरिक्षे श्वयति मातरिश्वा । तत्पुरुषे कृतीति सप्तम्या अलुक् । इकारलोपश्च पूर्ववत् । मुर्छेर्धश्च । मूर्धा । प्लिहेर्दीर्घश्च । प्लीहा । अरिपूर्वाद्यमेर्ण्यन्तादनि, अर्यमा । विश्वपूर्वात् प्सातेः किच्च । विश्वप्सा । परिपूर्वाज्ज्वलतेर्डिच्च । परिज्वा । महीयतेरीयल्लोपश्च । महा । अहतेर्नलोपश्च । अहः । मह्तेर्नलोपोऽघ् चान्तः । मघवा । नञ्पूर्वात् खर्वेः खस्यथश्च । अथर्वा । इतिकरणादन्येऽपि भवन्ति ॥

## पप्यशौभ्यां तन् ॥ १०३ ॥

सप्त । अष्ट ॥

## स्नामदिपद्यर्त्तिपॄशकिभ्यो वन् ॥ १०४ ॥

स्नावा । मद्वा । मद्वरी । बाहुलकात् ङीब्वनोरश्च । पद्वा । अर्वा । पर्वा । शक्वा । शक्वरी ॥

## सृजे स्रज्सृक्वौ च ॥ १०७ ॥

क्वनिप् ॥ स्रक्वा । सृक्वणी ॥

## ध्याप्योर्धी पी च ॥ १०८ ॥

क्विनिप् ॥ धीवा । पीवा ॥

## अतेर्ध च ॥ १०९

क्वनिप् ॥ अश्मा ॥

मन् ॥ ९११ ॥

सर्वधातुभ्यो बहुलम् ॥ कर्म । वर्म । वर्त्म । चर्म । जन्म । श्लेष्मा । इत्यादि ॥

बृहेर्नोऽच्च ॥ ९१३ ॥

मन् ॥ ब्रह्म । ब्रह्मा ॥

व्येञ एदोतौ च वा ॥ ९१४ ॥ ॥

मन् ॥ व्येम । व्येमा । व्योम । व्याम ॥

स्यतेरी च वा ॥ ९१५ ॥

मन् ॥ सीमा । साम ॥

सात्मन्नात्मन्वेमन्रोमन्क्षोमन्ललामन्नामन्पाप्मन्पक्ष्मन्यक्ष्मन्निति ॥ ९१६ ॥

एते मनन्ता निपात्यन्ते ॥ स्यतेस्तोऽन्तश्च । सात्म । अतेर्दीर्घश्च । आत्मा । वेञ आत्वाभावश्च । वेम । रहेर्लुक् च । रोम । लत्वे, लोम । क्षमेरोश्च । क्षोम । लातेर्द्वित्वं च । ललाम । नमेरा च । नाम । पातयतेस्त प् च । पाप्मा । पक्षे क' पोऽन्तो नलोपश्च । पक्ष्म । यक्ष्यतेर्यक्ष, इणो वा । यक्ष्मा । इतिकरणान् नोकमरकूमात्य ॥

गमेरिन् ॥ ९१९ ॥

गमिष्यतीति गमी जिगमिषु ॥

आङश्च णित् ॥ ९२० ॥

गमेरिन् ॥ आगामी । गामी ॥

भुवो वा ॥ ९२२ ॥

इन् स च णित् ॥ भावी । भवी ॥

परमात् कित् ॥ ९२५ ॥

स्थ इन् ॥ परमेष्ठी। भीरुष्ठानादित्वात् षत्वम्, सप्तम्या अलुप् च ॥

पथिमन्थिभ्याम् ॥ ९२६ ॥

किदिन् ॥ पन्थाः । मन्थाः ॥

अर्तेर्मुक्षिनक् ॥ ९२८ ॥

ऋमुक्षाः ॥

पतेरत्रिन् ॥ ९३० ॥

पतत्री ॥

आपः क्विप् ह्रस्वश्च ॥ ९३१ ॥

आपः । स्वभावाद्बहुत्वम् ॥

ककुप्त्रिष्टुबनुष्टुभ ॥ ९३२ ॥

क्विबन्ता निपात्यन्ते ॥ कुपूर्वात् स्कुभ्नाते सलोपश्च । ककुभः । ककुप् । त्र्यनुपूर्वात् स्तुभ्नाते सः षश्च । त्रिष्टुप् । अनुष्टुप् । बहुवचनान्निजिनिजिविषा क्विप् शित् । नेनिक् । वेविट् । पेविट् ॥

इणो दमक् ॥ ९३८ ॥

इदम् ॥

कोर्डिम् ॥ ९३९ ॥

किम् ॥

तूपेरीम् णोऽन्तश्च ॥ ९४० ॥

तूष्णीम् ॥

गॄपॄदुर्विधुर्विभ्यः क्विप् ॥ ९४३ ॥

गीः । पूः । दूः । धूः ॥

वाह्यारौ ॥ ९४४ ॥

क्विन्तौ निपात्येते ॥ वृणातेर्ह्रस्वश्च । वाः । कर्मणि दश्च धात्वादिः । वृण्वन्ति तामिति द्वाः । द्वृञ् वरणे इत्यस्य च णिगन्तस्य रूपम् ॥

सहेः षप् च ॥ ९५१ ॥

क्विप् ॥ षट् ॥

असुन् ॥ ९५२ ॥

धातुभ्यो बहुलम् ॥ तपः । नमः । तमः । नभः । सर । तेजः ॥

पाहाकृभ्यां पयह्वौ च ॥ ९५३ ॥

असुन् ॥ पयः । ग ॥

छदिवहिभ्यां छन्दोधौ च ॥ ९५४ ॥

असु ॥ छन्दः । ऊधः ॥

अशेर्यश्चादि ॥ ९५८ ॥

असुन् ॥ यशः ॥

उपेर्ज च ॥ ९५९ ॥

असुन् ॥ ओजः ॥

स्कन्देर्ध च ॥ ९६० ॥

असुन् ॥ स्कन्ध ॥

अवेर्वा ॥ ९६१ ॥

असुन् तद्योगे पश्च ॥ अधः । अव ॥

अमेर्भंहौ चान्तौ ॥ ९६२ ॥

अस् ॥ अम्भः । अंह. ॥

अदेरन्ध च ना ॥ ९६३ ॥

अस् ॥ अन्ध । अद्म ॥

आपोऽपाप्साप्सराब्जाश्च ॥ ९६४ ॥

अस् ॥ अपः । अप्स' । अप्सरसः । अब्जः ॥

उच्यङ्के क च ॥ ९६५ ॥

अस् ॥ ओक' । अङ्क ॥

अर्त्तेरुराशौं च ॥ ९६७ ॥

अस् ॥ उरः । अर्शांसि ॥

चस्त्यगिभ्या णित् ॥ ९७० ॥

अस् ॥ वासः । आग ॥

मिथिरञ्ज्युपितृपशभूवटिभ्य कित् ॥ ९७१ ॥

अस् ॥ मिथ. । रजः । उषा । तिरस्करोति । पुरः । शिर
श्रुर' । उला ॥

विधेर्वा ॥ ९७२ ॥

अस् कित् । वेधा । विधा' ॥

नञ ईहेरेहेधौ च ॥ ९७५ ॥

अस् ॥ अनेहा । अनेधा ॥

विहायस्सुमनस्पुरदशस्पुरूरवोऽङ्गिरस ॥ ९७६ ॥

अस्प्रत्ययान्ता निपात्यन्ते॥ विपूर्वाज्जहातेर्जिहीतेर्वा योऽन्तश्च विहाय. । विहाया । सुपूर्वान्मानेर्ह्रस्वश्च । सुमनस. । पुरुदशा । पुरु-पूर्वाद्रौतेर्दीर्घश्च । पुरूरवा । अङ्गेरिरोऽन्तश्च । अङ्गिरा ॥

पातेर्जस्थसौ ॥ १७७ ॥

पाजः । पाथः ॥

स्रुरीभ्यां तस् ॥ १७८ ॥

स्रोतः । रतः ॥

अर्तीण्भ्यां नस् ॥ १७९ ॥

अर्णः । एनः ॥

पचिवचिभ्यां सस् ॥ १८३ ॥

पक्षः । वक्षः ॥

वष्टेः कनस् ॥ १८५ ॥

उशना ॥

चन्देो रमस् ॥ १८६ ॥

चन्द्रमाः ॥

दमेरुनसूनसौ ॥ १८७ ॥

दमुनाः । दमूनाः ॥

रुच्यार्चिशुचिहुसृपिछादिछृदिभ्य इस् ॥ १८९ ॥

रोचिः । अर्चिः । शोचिः । हविः । सर्पिः । छदिः । छदेरिस्मन्त्रट्क्विषिति ह्रस्वः । छदिः । बाहुलकाद् दीर्घत्वे, छादिः । छर्दिः ॥

बहिवृहेर्नलुक् च ॥ १९० ॥

इस् ॥ बर्हि । बर्हिः ॥

द्युतेरादेश्च ज ॥ १९१ ॥

इस् ॥ ज्योतिः ॥

नियो डित् ॥ १९४ ॥

इस् ॥ निश्निनोति ॥

अत्रेर्णित् ॥ ९९५ ॥

इस् ॥ आविष्करोति ॥

रुचर्त्तिजनितनिधनिमनिमन्थिपतपित्रपिनपिय-जिप्रादिवेपिभ्य उस् ॥ ९९७ ॥

रोद्ध: । अर । जनु । तनुः । धनु. । मनुः । मन्थु. । पर. । तपु । त्रपुः । वपु । यजुः । मादुर्भवति । वेपु ॥

इणो णित् ॥ ९९८ ॥

उस् ॥ आयु ॥

दुपेर्डित् ॥ ९९९ ॥

उस् ॥ दुष्पुरुष ॥

मुहिमिष्यादे कित् ॥ १००० ॥

उस् ॥ मुहु । मिथुः । आदिग्रहणादन्येऽपि ॥

चक्षे शिडा ॥ १००१ ॥

किदुस् ॥ चक्षु । अवचक्षु । अचक्षु ॥

पातेर्डुमसु ॥ १००२ ॥

पुमान् ॥

न्युदुभ्यामश्चे ककौंसष्टावद्य ॥ १००३ ॥

नीचम । उच्चम । नीचा । उच्चा । नीचै । उच्चै ॥

शमो नियो डैम् मलुक् च ॥ १००४ ॥

शनै ॥

यमिदमिभ्यां डोस् ॥ १००५ ॥

यो । दो ॥

अनसो वहे क्विप् सश्च डः ॥ १००६ ॥

अनड्वान् ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलामिलिन्दायमानान्तेवासिसंविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायामुत्तरार्द्धे उणादिविवृतिः ॥

॥ अथोत्तरकृदन्तप्रक्रिया ॥

वर्त्स्यति गम्यादि ॥ ५ । ३ । १ ॥

इन्नाद्यन्तं साधु ॥ गमी ग्रामम् । आगामी ॥

वा हेतुसिद्धौ क्तः ॥ ५ । ३ । २ ॥

वर्त्स्यदर्थाद्धातोः ॥ मेघश्चेद्वृष्टः सम्पन्नाः सम्पत्स्यन्ते वा शालयः ॥

कषोऽनिटः ॥ ५ । ३ । ३ ॥

वर्त्स्यदर्थात् क्तः ॥ कष्टम् । कष्टा दिशस्तमसा । अनिट इति किम् ? । कषिता: शत्रवः । क्रियायां क्रियार्थायां तुम् णकच् भविष्यन्ती ॥

क्त्वातुमम् भावे ॥ ९ । १ । १३ ॥

कर्तुं व्रजति ॥ कारको व्रजति ॥

कालवेलासमये तुम्वाऽवसरे ॥ ५ । ४ । ३३ ॥

उपपदे गम्ये धातोः ॥ कालो भोक्तुम् । वेला भोक्तुम् । समयो

पचति भूतानि ॥

शकधृषज्ञारभलभसहार्हग्लाघटास्तिसमर्थार्थे च तुम् ॥ ५ । ४ । ९० ॥

शक्याद्यर्थेषु इच्छार्थेषु च धातुषु समर्थार्थेषु च नामसूपपदेषु कर्मभूताद्धातोस्तुम् ॥ शक्नोति पारयति वा भोक्तुम् । एवं धृष्णोति जानाति आरभते लभते सहते अर्हति ग्लायति घटते अस्ति समर्थ इच्छति वा भोक्तुम् ॥

कर्मणोऽण् ॥ ५ । ३ । १४ ॥

क्रियायां क्रियार्थायामुपपदे कर्मभूतादपि धातो' ॥ कुम्भकारो याति ॥

भाववचनाः ॥ ५ । ३ । १५ ॥

क्रियायां क्रियार्थायामुपपदे भत्स्यर्थाद्धातोर्घञ्त्याद्य. ॥ पाकाय, पक्तये, पचनाय वा याति ॥

पदरुजविशस्पृशो घञ् ॥ ५ । ३ । १६ ॥

पादः । रोग' । वेश । स्पर्श ॥

सर्ते स्थिरव्याधिबलमत्स्ये ॥ ५ । ३ । १७ ॥

कर्त्तरि घञ् ॥ सार. स्थिर' । अतीसारो व्याधि । सारो बलम् । विसारो मत्स्य ॥

भावाकर्त्रोः ॥ ५ । ३ । १८ ॥

धातोर्घञ् ॥ पाक । प्राकार । दायो दत्त.॥

स्फुरस्फुलोर्घञि ॥ ४ । २ । ४ ॥

सन्ध्यक्षरस्यात् ॥ विस्फार । विस्फाल ॥

घञि भावकरणे ॥ ४ । २ । ५२ ॥

रञ्जेरुपान्त्यनो लुक् ॥ राग । भावकरणइति किम्?। आधारे रङ्गः॥

स्यदो जवे ॥ ४ । २ । ५३ ॥

स्यन्देर्घञि नलुग्वृद्ध्यभावौ निपात्येते वेगेऽर्थे ॥ गोस्यदः । जव इति किम्?। घृतस्यन्द. ॥

दशनावोदैधोद्मप्रश्रथहिमश्रथम् ॥ ४ । २ ५४ ॥

दंशेरनटि अवपूर्वस्योन्दे इन्धेश्च घञि नलोप प्रहिमपूर्वस्य श्रन्थेर्घञि वृद्ध्यभावश्च निपात्यते। दशनम्। अवोदः। एधः। ओद्मः। प्रश्रथः। हिमश्रथ । मोऽकमियमीति वृद्धिनिषेधः। शमः । दम । विश्रमेर्वा । विश्रमः । विश्रामः ॥

उद्यमोपरमौ ॥ ४ । ३ । ५७ ॥

अत्र घञि वृद्ध्यभावो निपात्यते ॥ उद्यम । उपरमः ॥

इङोऽपादाने तु टिद्वा ॥ ५ । ३ । १९ ॥

भावाकर्त्रोर्घञ् ॥ अध्याय. । उपाध्यायी । उपाध्यायः ॥

श्रो वायुवर्णनिवृते ॥ ५ । ३ । २० ॥

भावाकर्त्रोर्घञ् ॥ शारो वायुः वर्णो वा। नीशार प्रावरणम् ॥

निरभे पूल्व ॥ ५ । ३ । २१ ॥

भावाकर्त्रोर्घञ् ॥ निष्पाव । अभिलाव ॥

रोरुपसर्गात् ॥ ५ । ३ । २२ ॥

भावाकर्त्रोर्घञ् ॥ सराव. ॥

भूश्र्यदोऽल् ॥ ५ । ३ । २३ ॥

उपसर्गपूर्वाद्भावाकर्त्रोः ॥ प्रभव । संश्रयः । विघस । उपसर्गादित्येव । भावः ॥

न्यादो नवा ॥ ५ । ३ । २४ ॥

निपूर्वस्यादेः अलि घस्लभावोऽभ्यो दीर्घश्च वा ॥ न्यादः । निघस ॥

सनिव्युपाद्यमः ॥ ५ । ३ । २५ ॥

भावाकर्त्रोरल् वा ॥ संयमः । संयाम । नियमः । नियामः । वियमः । वियामः । उपयमः । उपयाम ॥

नेर्नदगदपठस्वनक्वण. ॥ ५ । ३ । २६ ॥

भावाकर्त्रोरल् वा ॥ निनद २ । निगद २ । निपठ २ । निस्वनः २ । निक्वणः २ ॥

वैणे क्वण ॥ ५ । ३ । २७ ॥

उपसर्गाद् भावाकर्त्रोरल् वा । प्रक्वण., प्रक्वाणो वा वीणायाः । वैण इति किम् ? । प्रक्वाणः शृङ्खलस्य ॥

युवर्णवृदृवशरणगमृद्ग्रह ॥ ५ । ३ । २८ ॥

भावाकर्त्रोरल् ॥ चय. । क्रय । रव. । लव । वर । आदर । वश । रण । गम । कर । ग्रह ॥

वर्षादय क्लीबे ॥ ५ । ३ । २९ ॥

अलन्ता वर्षादयो भावाकर्त्रोर्निपात्यन्ते ॥ नपुंसकक्तानड्निषेध्यर्थ वचनम् । वर्षम् । भयम ॥

समुदोऽज. पशौ ॥ ५ । ३ । ३० ॥

भावाकर्त्रोरल् ॥ समज पशूनाम् । उदज. पशूनाम । पशाविति किम् ? । समाजो नृणाम् ॥

सृग्लह प्रजनाक्षे ॥ ५ । ३ । ३१ ॥

भावाकर्त्रोरल् । गवामुपसर । अक्षाणा ग्लह । प्रजनाक्ष इति

किम् ? । उपसारो भृत्यै राज्ञाम् ॥

**पणेर्माने ॥ ५ । ३ । ३२ ॥**

भावाकर्त्रोरल् ॥ मूल्कपण । मान इति किम् ? । पाणः ॥

**सम्मदप्रमदौ हर्षे ॥ ५ । ३ । ३३ ॥**

भावाकर्त्रोरलन्तौ स्याताम् ॥ सम्मदः प्रमदो वा स्त्रीणाम् । हर्षे इति किम् ? । सम्मादः ॥

**हनोन्तर्घनान्तर्घणौ देशे ॥ ५ । ३ । ३४ ॥**

निपात्येते ॥ अन्तर्घनः, अन्तर्घणो वा देशः । अन्तर्घातोऽन्यः ॥

**प्रघणप्रघाणौ गृहांशे ॥ ५ । ३ । ३५ ॥**

निपात्येते ॥ प्रघण', प्रघाणो वा द्वारालिन्दक' । प्रघातोऽन्यः ॥

**निघोद्घसङ्घोद्घनापघनोपघ्न निमितप्रशस्तगणात्याधानाङ्गासन्नम् ॥ ५ । ३ । ३६ ॥**

हन्तेः कृतघत्वाघलन्त निपात्यते ॥ समन्ततो मितं निमितम् । निघा वृक्षाः । उद्घ प्रशस्तः । सङ्घः प्राणिसमूहः । अत्याधीयन्ते छेदनार्थं कुट्टनार्थं वा काष्ठादीनि यत्र तदत्याधानम् । उद्घन. । अपघनः शरीरावयवः । उपघ्न आसन्न ॥

**मूर्त्तिनिचिताभ्रे घन. ॥ ५ । ३ । ३७ ॥**

हन्तेर्निपात्यते ॥ मूर्त्ति. काठिन्यम् । अभ्रस्य घन' । निचित निरन्तरम् । घनाः केशाः । अभ्रं मेघः । घन ॥

**व्ययोद्रो करणे ॥ ५ । ३ । ३८ ॥**

हन्तेरल् घनादेशश्च ॥ विघनः । अयोघनः । द्रुघनः ॥

**स्तम्बाद् घ्नश्च ॥ ५ । ३ । ३९ ॥**

न्तेरल् घन करणे ॥ स्तम्बघ्नो दण्ड. । स्तम्बघनी यष्टिः ॥

परेर्घः ॥ ५ । ३ । ४० ॥

हन्तेरल् करणे ॥ परिघोऽर्गला ॥

परेर्घाङ्कयोगे ॥ २ । ३ । १०३ ॥

रो ल् वा ॥ पलिघ । परिघः। पल्यङ्कः। पर्यङ्क'। पलियोगः। परियोग' ॥

ऋफिडादीनां डश्च ल ॥ २ । ३ । १०४ ॥

। ऋर लृलौ वा । ऋफिड'। लृफिड । ऋतक. । लृतक' । कपरिका । कपलिका ॥

जपादीनां पो व ॥ २ । ३ । १०५ ॥

वा ॥ जवा । जपा । पारावत' । पारापत. ॥

ह्व समाह्वयाह्वयौ द्यूतनाम्नो ॥ ५ । ३ । ४१ ॥

निपात्येते ॥ समाह्वयः प्राणिद्यूतम् । आह्वयः सञ्ज्ञा ॥

न्यभ्युपवेर्वाश्चोत् ॥ ५ । ३ । ४२ ॥

ह्वो भावाकर्त्रोरल् ॥ निहव । अभिहवः । उपहव. । विहव' ॥

आङो युद्धे ॥ ५ । ३ । ४३ ॥

ह्वो भावाकर्त्रोरल् वा उश्च ॥ आहवो युद्धम् । युद्ध इति किम् ? । आह्वायः ॥

आहावो निपानम् ॥ ५ । ३ । ४४ ॥

निपानेऽर्थे आङ्पूर्वात् ह्वो भावाकर्त्रोरल् आहावादेशश्च निपात्यते । आहावो वीनाम् ॥

भावेऽनुपसर्गात् ॥ ५ । ३ । ४५ ॥

ह्वोऽल् वा उश्च ॥ हवः । भाव इति किम् ? । व्याप्ये ह्वायः । अनुपसर्गादिति किम् ? । आह्वायः ।

## हनो वा वधू च ॥ ५ । ३ । ४६ ॥

अनुपसर्गाद् भावेऽल् ॥ वध । घातः ॥

## व्यधजपमद्भ्यः ॥ ५ । ३ । ४७ ॥

अनुपसर्गेभ्यो भावाकर्त्रोरल् ॥ व्यधः । जपः । मदः ॥

## नवा क्वणयमहसस्वनः ॥ ५ । ३ । ४८ ॥

अनुपसर्गाद् भावाकर्त्रोरल् ॥ क्वणः । क्वाणः । यमः । यामः । हसः । हासः । स्वनः । स्वानः ॥

## आङो रुप्लोः ॥ ५ । ३ । ४९ ॥

भावाकर्त्रोरल् वा ॥ आरवः । आरावः । आप्लवः । आप्लावः ॥

## वर्षविघ्नेऽवाद् ग्रहः ॥ ५ । ३ । ५० ॥

भावाकर्त्रोरल् वा ॥ अवग्रहः । अवग्राहः । वर्षविघ्न इति किम् ? । अवग्रहोऽर्थस्य ॥

## प्राद्रश्मितुलासूत्रे ॥ ५ । ३ । ५१ ॥

ग्रहेर्भावाकर्त्रोरल् वा ॥ प्रग्रहः । प्रग्राहः ॥

## वृगो वस्त्रे ॥ ५ । ३ । ५२ ॥

प्राद्भावाकर्त्रोरल् वा ॥ प्रवरः । प्रावारः । वस्त्र इति किम् ? । प्रवरो यतिः ॥

## उद् श्रेः ॥ ५ । ३ । ५३ ॥

भावाकर्त्रोरल् वा ॥ उच्छ्रय । उच्छ्राय ॥

## युपुद्रोर्घञ् ॥ ५ । ३ । ५४ ॥

उदो भावाकर्त्रोर्घञ् ॥ उद्यावः । उत्पावः उद्द्रावः ॥

ग्रह. ॥ ५ । ३ । ५५ ॥

उदो भावाकर्त्रोर्घञ् । उद्ग्राह ॥

न्यवाच्छापे ॥ ५ । ३ ५६ ॥

ग्रहेर्गम्ये भावाकर्त्रोर्घञ् ॥ निग्राह', अवग्राहो वा ते जाल्म भूयात् । शाप इति किम ? । निग्रहश्चौरस्य ॥

प्राल्लिप्सायाम् ॥ ५ । ३ । ५७ ॥

ग्रहेर्गम्यायां भावाकर्त्रोर्घञ् ॥ पात्रप्रग्राहेण चरति पिण्डपातार्थी भिक्षु । लिप्सायामिति किम ? । स्रुवस्य प्रग्रहः ॥

समो मुष्टौ ॥ ५ । ३ । ५८ ॥

ग्रहेर्भावाकर्त्रोर्घञ् ॥ सङ्ग्राहो मल्लस्य । मुष्टाविति किम् ? । सग्रह' शिष्यस्य ॥

युदुद्रो ॥ ५ । ३ । ५९ ॥

सम्पूर्वाद्भावाकर्त्रोर्घञ् ॥ सयाव' । सदाव । सन्द्राव ॥

'नियश्चानुपसर्गाद्वा ॥ ५ । ३ । ६० ॥

युदुद्रोर्भावाकर्त्रोर्घञ् ॥ नाय । नय । याव' २ । दाव. २ । द्राव २ । अनुपसर्गादिति किम् ? । प्रणय ।

वोद ॥ ५ । ३ । ६१ ॥

नियो भावाकर्त्रोर्घञ् । उन्नाय. । उन्नय' ।

अवात् ॥ ५ । ३ । ६२ ॥

नयतेर्भावाकर्त्रोर्घञ् ॥ अवनाय ॥

परेर्द्युते ॥ ५ । ३ । ६३ ॥

नयतेर्भावाकर्त्रोर्घञ् ॥ परिणायेन, शारीन् हन्ति । द्यूत इति किम् ? । परिणयोऽस्याः ॥

भुवोऽवज्ञाने वा ॥ ५ । ३ । ६४ ॥

परेर्भावाकर्त्रोर्घञ्॥ परिभावः । परिभवः । अवज्ञान इति किम् ? । समन्ताद् भूतिः परिभवः ॥

यज्ञे ग्रह ॥ ५ । ३ । ६५ ॥

परेर्भावाकर्त्रोर्घञ् ॥ पूर्वपरिग्राह । यज्ञ इति किम् ? । परिग्रहोऽर्थस्य ॥

सस्तो ॥ ५ । ३ । ६६ ॥

यज्ञविषये भावाकर्त्रोर्घञ् ॥ संस्तावश्छन्दोगानाम् ॥

प्रात्स्नुद्रुस्तो ॥ ५ । ३ । ६७ ॥

भावाकर्त्रोर्घञ् । प्रस्राव । प्रद्रावः । प्रस्तावः ॥

अयज्ञे स्त्रः ॥ ५ । ३ । ६८ ॥

प्राद्भावाकर्त्रोर्घञ् । प्रस्तार. । अयज्ञ इति किम् ? । बर्हिष्प्रस्तरः ।

वेरशब्दे प्रथने ॥ ५ । ३ । ६९ ॥

स्तो घञ् ॥ विस्तारः पटस्य । प्रथन इति किम् ? । तृणस्य विस्तर । अशब्द इति किम् ? । वाक्यविस्तरः ॥

छन्दोनाम्नि ॥ ५ । ३ । ७० ॥

वेः स्त्रो भावाकर्त्रोर्घञ् । विष्टारपङ्क्तिश्छन्दः ॥

क्षुश्रोः ॥ ५ । ३ । ७१ ॥

वेर्भावाकर्त्रोर्घञ् ॥ विक्षावः । विश्रावः ॥

न्युदो ग्र. ॥ ५ । ३ । ७२ ॥

भावाकर्त्रोर्घञ् ॥ निगारः । उद्गारः ॥

किरो धान्ये ॥ ५ । ३ । ७३ ॥

न्युदो भावाकर्त्रोर्घञ् । निकार', उत्कारो धान्यस्य । धान्य इति किम् ? । फलनिकरः ॥

नेर्वु ॥ ५ । ३ । ७४ ॥

धान्यविशेषे भावाकर्त्रोर्घञ् ॥ नीवारा व्रीहय' ॥

इणोऽभ्रेषे ॥ ५ । ३ ७५ ॥

नेर्भावाकर्त्रोर्घञ् । स्थितेरचलनमभ्रेषः । न्याय. । अभ्रेष इति किम् ? । न्यय गतश्चौर ॥

परे क्रमे ॥ ५ । ३ । ७६ ॥

इणो भावाकर्त्रोर्घञ् ॥ क्रम' परिपाटि' । तव पर्यायो भोक्तुम् । क्रम इति किम् ? । पर्ययो गुरो' ॥

व्युपाच्छीङ ॥ ५ । ३ । ७७ ॥

क्रमे भावाकर्त्रोर्घञ् ॥ तव राजविशाय. । मम राजोपशाय' । क्रम इति किम् ? । विशय ।

हस्तप्राप्ये चेरस्तेये ॥ ५ । ३ । ७८ ॥

भावाकर्त्रोर्घञ् । पुष्पप्रचाय । हस्तप्राप्य इति किम् ? । पुष्पप्रचय करोति वृक्षाग्रे । अस्तेय इति किम् ? । स्तेयेन पुष्पप्रचय करोति ॥

चितिदेहावासोपसमाधाने कश्चादे ॥ ५ ३ । ७९ ॥

चेर्भावाकर्त्रोर्घञ् । चिति यज्ञेऽग्निविशेष' तदाधारो वा । आकायमग्निं चिन्वीत । कायो देहः । ऋषिनिकाय. । उपसमाधानमुपर्युपरि राशीकरणम् । गोमयनिकाय ॥

सङ्घेऽनूर्ध्वे ॥ ५ । ३ । ८० ॥

चेर्भावाकर्त्रोर्घञ् आदेः कश्च । तार्किकनिकायः । सङ्घ इति किम् ? । सारसमुच्चयः । अनूर्ध्व इति किम् ? । शूकरनिचय ॥

माने ॥ ५ । ३ । ८१ ॥

गम्ये धातोर्भावाकर्त्रोर्घञ् । एको निष्पावः । समित्सङ्ग्राहः । मान इति किम् ? । निश्चयः ॥

स्थादिभ्य क ॥ ५ । ३ । ८२ ॥

भावाकर्त्रोः ॥ आखूत्थ । प्रस्थः । प्रपा ॥

ट्वितोऽथु ॥ ५ । ३ । ८३ ॥

धातोर्भावाकर्त्रो ॥ वेपथु ।

ड्वितस्त्रिमक्तत्कृतम् ॥ ५ । ३ । ८४ ॥

धातोर्भावाकर्त्रोः । पक्त्रिमम् ॥

यजिस्वपिरक्षियतिप्रच्छो न ॥ ५ । ३ । ८५ ॥

भावाकर्त्रोः । यज्ञः । स्वप्नः । रक्ष्णः । यत्नः । प्रश्नः ॥

विच्छो नङ् ॥ ५ । ३ । ८६ ॥

भावाकर्त्रो. । विश्न. ॥

उपसर्गाद्द. कि ॥ ५ । ३ । ८७ ॥

भावाकर्त्रोः ॥ आदि । निधिः ॥

व्याप्यादाधारे ॥ ५ । ३ । ८८ ॥

दो भावाकर्त्रो. कि. ॥ जलधिः ॥

॥ ५ । ३ । ८९ ॥

अन्त.पूर्वाद्यागो भावाकर्त्रो. क्तिः ॥ अन्तर्द्धि॰ ॥

अभिव्याप्तौ भावेऽनजिन् ॥ ५ । ३ । ९० ॥

गम्यायां धातो ॥ संरवणम् । साराविणम् । अभिव्याप्तौ किम् ? । सरावः ॥

स्त्रियां क्तिः ॥ ५ । ३ । ९१ ॥

धातोर्भावाकर्त्रोः ॥ घञोऽपवाद । कृति । स्त्रियामिति किम् ? । कारः ॥

तेर्ग्रहादिभ्य ॥ ४ । ४ । ३३ ॥

एभ्य एव स्तात्रेशित आदिरिट् । निगृहीतिः । अपस्निहितिः । ग्रहादिभ्य एवेति नियमादन्यत्र न । शान्ति ॥

अपाध्यायथि. क्तौ ॥ ४ । २ ॥ ६६ ॥

अपचिति । हति॰ । तीर्णिः । लूनि । धूनि ॥

श्रुव्यादिभ्य ॥ ५ । ३ । ९२ ॥

धातुभ्यो भावाकर्त्रो॰ स्त्रिया क्ति॰ ॥ वक्ष्यमाणे क्विबादिभि॰ सह समावेशार्थं वचनम् । श्रुति । प्रतिश्रुत् । सम्पत्तिः । सम्पत् ॥

समिणासुग ॥ ५ । ३ । ९३ ॥

भावाकर्त्रो. स्त्रिया क्ति॰ । समितिः । आसुति ॥

सातिहेतियूतिजूतिज्ञप्तिकीर्त्ति ॥ ५ । ३ । ९४ ॥

भावाकर्त्रोर्निपात्यते ॥ साति । हतिः । यूति॰ । जूति. । ज्ञप्ति । कीर्त्ति ॥

गापापचो भावे ॥ ५ । ३ । ९५ ॥

स्त्रिया क्तिः । सङ्गीतिः । प्रपीतिः । पक्तिः ॥

स्थो वा ॥ ५ । ३ । ९६ ॥

भावे स्त्रियां क्तिः ॥ प्रस्थितिः । आस्था ॥

आस्यटिव्रज्यजः क्यप् ॥ ५ । ३ । ९७ ॥

भावे स्त्रियाम् । आस्या । अट्या । व्रज्या । इज्या ॥

भृगो नाम्नि ॥ ५ । ३ । ९८ ॥

भावे स्त्रिया क्यप् ॥ भृत्या । नाम्नीति किम् ? । भृतिः ।

समजनिपन्निपद्शीङ्सुग्विदिचरिमनीणः ॥५।३।९९॥

भावाकर्त्रोः स्त्रिया नाम्नि क्यप् ॥ समज्या । निपत्या । निपद्या । शय्या । सुत्या । विद्या । चर्या । मन्या । इत्या । नाम्नीत्येव । सवीतिः ॥

कृग श च वा ॥ ५ । ३ । १०० ॥

भावाकर्त्रोः स्त्रियां क्यप् ॥ क्रिया । कृत्या । कृतिः ॥

मृगयेच्छायाच्ञातृष्णाकृपाभाश्रद्धान्तर्द्धा ॥ ५ । ३ । १०१ ॥

एते स्त्रिया निपात्यन्ते । मृगया । इच्छा । इत्यादि ।

परे सृचरेर्यः ॥ ५ । ३ । १०२ ॥

भावाकर्त्रोः स्त्रियाम् ॥ परिसर्या । परिचर्या ॥

वाऽटाट्यात् ॥ ५ । ३ । १०३ ॥

स्त्रिया भावाकर्त्रोर्यः ॥ अटाट्या । अटाटा ॥

जागुरश्च ॥ ५ । ३ । १०४ ॥

यः ॥ जागरा । जागर्या ॥

शसिप्रत्ययात् ॥ ५ । ३ । १०५ ॥

भावाकर्त्रोः स्त्रियाम्. ॥ मन्तसा । गोपाया ॥

क्तेटो गुरोर्व्यञ्जनात् ॥ ५ । ३ । १०६ ॥

भावाकर्त्रो. स्त्रियाम्. ॥ ईहा । क्तेट इति किम् ? । मस्ति' । गुरोरिति किम् ? । स्फूर्त्ति' । व्यञ्जनादिति किम् ? । संप्रीतिः ।

षितोऽङ् ॥ ५ । ३ । १०७ ॥

धातोर्भावाकर्त्रो स्त्रियाम् ॥ पचा ॥

भिदादयः ॥ ५ । ३ । १०८ ॥

स्त्रियां भावाकर्त्रोर्निपात्यन्ते ॥ भिदा । छिदा ॥

भीषिभूषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यः ॥ ५ । ३ । १०९ ॥

ण्यन्तेभ्य स्त्रियां भावाकर्त्रोरङ् ॥ भीषा । भूषा । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । स्पृहा । तोला । दोला ॥

उपसर्गादातः ॥ ५ । ३ । ११० ॥

स्त्रियां भावाकर्त्रोरङ् ॥ उपधा । उपसर्गादिति किम् ? । दत्ति' ॥

णिवेत्त्यासश्रन्थघट्टवन्देरनः ॥ ५ । ३ । १११ ॥

स्त्रियां भावाकर्त्रो । कारणा । वेदना । आसना । श्रन्थना । घट्टना । वन्दना ॥

इषोऽनिच्छायाम् ॥ ५ । ३ । ११२ ॥

स्त्रियां भावाकर्त्रोरन' ॥ अन्वेषणा । अनिच्छायामिति किम् ? । इष्टि' ॥

पर्येषेर्वा ॥ ५ । ३ । ११३ ॥

अनिच्छार्थादिषेः स्त्रियां भावाकर्त्रोरन । पर्येषणा । परीष्टिः । अन्वेषणा । अन्वीष्टि ॥

क्रुत्सम्पदादिभ्य. क्विप् ॥ ५ । ३ । ११४ ॥

स्त्रिया भावाकर्त्रो. ॥ क्रुत् । युत् । सम्पत् । विपत् ॥

भ्यादिभ्यो वा ॥ ५ । ३ । ११५ ॥

स्त्रियां भावाकर्त्रोः क्विप् ॥ भी. । भीतिः । ह्रीः । ह्रीतिः ॥

व्यतिहारेऽनीहादिभ्यो ञः ॥ ५ । ३ । ११६ ॥

धातुभ्यः स्त्रियां बाहुलकाञ्ज्ञाने ॥ नित्य ञमिनोऽण् ।

नञोऽनि शापे ॥ ५ । ३ । ११७ ॥

धातोर्गम्ये भावाकर्त्रोः स्त्रियाम् ॥ अजननिस्ते वृषल भूयात् । शाप इति किम् ? । अकृति. पटस्य ॥

ग्लाहाज्य ॥ ५ । ३ । ११८ ॥

स्त्रियां भावाकर्त्रोरनिः ॥ ग्लानि । हानि । ज्यानिः ॥

प्रश्नाख्याने वेञ् ॥ ५ । ३ । ११९ ॥

गम्ये स्त्रियां भावाकर्त्रो । का, कारिं, कारिका, क्रिया, कृत्या, कृतिं, वा अकार्षीं । सर्वां, कारिं, कारिका क्रिया, कृत्यां, कृतिं, वा अकार्षम् ॥

पर्यायार्हर्णोत्पत्तौ च णकः ॥ ५ । ३ । १२० ॥

प्रश्नाख्याने गम्ये स्त्रिया भावाकर्त्रो ॥ भवत आसिका । भवतः शायिका । अर्हसि त्वमिक्षुभक्षिकाम् । इक्षुभक्षिकां मे धारयसि । इक्षुभक्षिका उदपादि । कां कारिकामकार्षीः । सर्वां कारिकामकार्षम् ।

नाम्नि पुंसि च ॥ ५ । ३ । १२१ ॥

धातोः पर्गे भावाकर्त्रोः, स्त्रियां णकः ॥ प्रच्छर्दिका । शालभञ्जिका । अरोचकः ॥

भावे ॥ ५ । ३ । १२२ ॥

धात्वर्थनिर्देशे स्त्रियां धातोर्णकः ॥ शायिका ॥

क्लीबे क्तः ॥ ५ । ३ । १२३ ॥

भावे धातोः ॥ हसितं छात्रस्य । क्लीब इति किम् ? । हसः । हासः ॥

अनट् ॥ ५ । ३ । १२४ ॥

क्लीबे भावे धातोः ॥ गमनम् ॥

ष्ठिवसिवोऽनटि वा ॥ ४ । २ । ११२ ॥

दीर्घः ॥ निष्ठीवनम् । निष्ठेवनम् । सीवनम् । सेवनम् ॥

यत्कर्मस्पर्शात्कर्त्रङ्गसुखं ततः ॥ ५ । ३ । १२५ ॥

धातोः क्लीबे भावेऽनट् ॥ पयःपानं सुखम् । कर्मेति किम् ? तूलिकाया उत्थानं सुखम् । स्पर्शादिति किम् ? । अग्निकुण्डस्योपासनं सुखम् । कर्त्रिति किम् ? । शिष्येण गुरोः स्नापनं सुखम् । अङ्गेति किम् ? । पुत्रस्य परिष्वञ्जनं सुखम् । सुखमिति किम् ? । कण्टकानां मर्दनम् । नित्यसमासार्थमिदम् ॥

रम्यादिभ्यः कर्तरि ॥ ५ । ३ । १२६ ॥

अनट् । रमणी । कमनी ।

कारणम् ॥ ५ । ३ । १२७ ॥

कृगः कर्त्र्यनट् वृद्धिश्च ॥ कारणम् ॥

भुजिपत्यादिभ्यः कर्मापादाने ॥ ५ । ३ । १२८ ॥

अनट् ॥ भोजनम् । निरदनम् । प्रपतन । अपादानम् ॥

करणाधारे ॥ ५ । ३ । १२९ ॥

अनट् । एषणी । सक्तुधानी ॥

पुन्नाम्नि घ । ५ । ३ । १३० ॥

गम्ये करणाधारयोः ॥

एकोपसर्गस्य च घे ॥ ४ । २ । ३४ ॥

अनुपसर्गस्य छदेर्णौ ह्रस्वः । दन्तच्छदः । प्रच्छद । आकरः । पुमिति किम् ? । विचयनी । नाम्नीति किम् ? । प्रहरणो दण्डः ॥

गोचरसचरवहव्रजव्यजखलापणनिगमबकभग-कषाकषनिकषम् ॥ ५ । ३ । १३१ ॥

करणाधारयो पुन्नाम्नि घान्तं निपात्यते ॥ गोचरः । सञ्चरः । वहः । व्रज । व्यज । खलः । आपणः । निगमः । बकः । भगः । बाहुल्काद् भगम् । कषः । आकषः । निकषः ॥

व्यञ्जनाद् घञ् ॥ ५ । ३ । १३२ ॥

धातोः पुन्नाम्नि करणाधारयोः । वेदः ।

अवात्तृस्तृभ्याम् ॥ ५ । ३ । १३३ ॥

करणाधारयोः पुन्नाम्नि घञ् ॥ अवतारः । अवस्तारः ॥

न्यायावायाध्यायोद्यावसंहारावहाराधारदारजार-म् ॥ ५ । ३ । १३४ ॥

पुन्नाम्नि करणाधारयोर्घञन्त निपात्यते ॥ न्यायः । अवायः । अध्यायः । उद्यावः । संहार । अवहारः । आधार । दाराः । जारः ॥

उदङ्कोऽतोये ॥ ५ । ३ । १३५ ॥

पुन्नाम्नि करणाधारयोर्घञ् ॥ तैलोदङ्कः । अतोय इति किम्? । उदकोदञ्चन. । व्यञ्जनादिति सिद्धे तोये प्रतिषेधार्थं वचनम् ॥

आनायो जालम् ॥ ५ । ३ । १३६ ॥

आनायो मत्स्यानाम् ॥

खनो डडरेकेकवकघ च ॥ ५ । ३ । १३७ ॥

पुन्नाम्नि करणाधारयोर्घञ् । आख. । आखर । आखनिक । आखनिकवक । आखन । आखान ॥

इकिश्तिव् स्वरूपार्थे ॥ ५ । ३ । १३८ ॥

भञ्जि । कुधि । पचि । अर्थे, यजि' । भुजि । पचति' ॥

दुःस्वीषत कृच्छ्राकृच्छ्रार्थात्खल् ॥ ५ । ३ । १३९ ॥

दुःशयम् । दुष्कर । सुशयम् । सुकर । ईषच्छयम् । ईषत्करः। कृच्छ्राकृच्छ्रार्थ इति किम्? । ईषल्लभ्यं धनम् ॥

सुदुर्भ्यः ॥ ४ । ४ १०८ ॥

समस्ताभ्यां व्यस्ताभ्यां चोपसर्गात्पराभ्यां सुदुर्भ्यां लभः स्वरात्परः खल्घञोर्नोऽन्तः ॥ अतिसुलम्भम्। अतिदुर्लम्भम् । अतिसुलम्भ । अतिदुर्लम्भ । अतिसुदुर्लम्भ । उपसर्गादेव सुदुर्भ्य इति नियमार्थं वचनम् ॥

च्व्यर्थे कर्त्राप्याद् भूकृग ॥ ५ । ३ । १४० ॥

कृच्छ्राकृच्छ्रार्थेभ्यो दुःस्वीषद्भ्यः परात् खल्॥ दुराढ्यंभवम्। स्वाढ्यंभवम् । ईषदाढ्यंभवं भवता । दुराढ्यंकर । स्वाढ्यंकरः । ईषदाढ्यंकरश्चैत्रस्त्वया । च्व्यर्थ इति किम्? । दुराढ्येन भूयते ।

शासुयुधिदृशिधृषिमृषातोऽन ॥ ५ । ३ । १४१ ॥

कृच्छ्राकृच्छ्रार्थदुःस्वीषत्पूर्वात् । दुःशासनः । सुशासनः । ईष-च्छासनः । दुर्योधनः। सुयोधनः। ईषद्योधन । दुर्धर्षणः। दुर्मर्षणः। दुरुत्थानम् ॥

## णिन् चावश्यकाधमर्ण्ये ॥ ५ । ४ । ३६ ॥

गम्ये कर्त्तरि गम्ये कृत्याः ॥ अवश्यं कारी । अवश्यं हारी । अवश्य गेयो गीतस्य । शत दायी । गेयो गाथानाम् ॥

## निषेधेऽलखल्वोः क्त्वा ॥ ५ । ४ । ४४ ॥

उपपदयोर्धातोर्वा । अलंकृत्वा । खलुकृत्वा । पक्षे अलं रुदितेन ।

## परावरे ॥ ५ । ४ । ४५ ॥

गम्ये क्त्वा वा ।

## अनञः क्त्वो यप् ॥ ३ । २ । १५४ ॥

अव्ययात्परस्योत्तरपदस्य । अतिक्रम्य नदीं गिरिः । अप्राप्य नदीं गिरिः । अनञ इति किम् ? । अकृत्वा । परमकृत्वा ॥

## निमील्यादिमेङस्तुल्यकर्तृके ॥ ५ । ४ । ४६ ॥

धातोः सम्बन्धे क्त्वा वा ॥ अक्षिणी निमील्य हसति । मुखं व्यादाय स्वपिति ॥

## मेङो वा मित् ॥ ४ । ३ । ८८ ॥

यपि । अपमित्य याचते । पक्षे, अपमातु याचते । तुल्यकर्तृक इति किम् ? । चैत्रस्याक्षिनिमीलने मैत्रो हसति ॥

## प्राक्काले ॥ ५ । ४ । ४७ ॥

परकालेन धात्वर्थेन तुल्यकर्तृके वर्त्तमानाद्धातोः सम्बन्धे क्त्वा वा । आसित्वा भुङ्क्ते । पक्षे । आस्यते भोक्तुम् । प्राक्काल इति किम् ? । भुज्यते ॥

जनशो न्युपान्त्ये तादिः क्त्वा ॥ ४ । ३ । २३ ॥

भक्त्वा । रक्त्वा । रङ्क्त्वा । नष्ट्वा । नंष्ट्वा । नीति किम्? । भुक्त्वा । उपान्त्य इति किम्? । नीत्वा । तादिरिति किम्? । विभज्य ॥

ऋतृषमृषकृशवञ्चलुञ्चथफः सेट् ॥ ४ । ३ । २४ ॥

न्युपान्त्ये सति क्त्वा वा किद्वत् । ऋतित्वा । अर्तित्वा । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । वचित्वा । वञ्चित्वा । लुचित्वा । लुञ्चित्वा । ग्रथित्वा । ग्रन्थित्वा । गुफित्वा । गुम्फित्वा । न्युपान्त्य इति किम्? । कोथित्वा । रेफित्वा । सेडिति किम्? । वक्त्वा । गौ व्यञ्जनादेरिति नित्ये । द्युतित्वा । द्योतित्वा । लिखित्वा । लेखित्वा ॥

क्त्वा ॥ ४ । ३ । २९ ॥

सेट् किन्न ॥ देवित्वा । सेडित्येव । कृत्वा ॥

स्कन्दस्यन्दः ॥ ४ । ३ । ३० ॥

क्त्वा किन्न । स्कन्त्वा । स्यन्त्वा ।

क्षुधक्लिशकुषगुधमृडमृदवदवसः ॥ ४ । ३ । ३१ ॥

क्त्वा सेट् किद्वत् । क्षुधित्वा । क्लिशित्वा । कुषित्वा । गुधित्वा । मृडित्वा । मृदित्वा । उदित्वा । उषित्वा । रुदविदेति किस्थे, रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा । क्षुप्त्वा । पृष्ट्वा । आत्वे । खात्वा । पक्षे, खनित्वा । इत्वे, दित्वा । सित्वा । मित्वा । स्थित्वा । दधातेर्हिः । हित्वा ॥

हाको हिः क्त्वि ॥ ४ । ४ । १४ ॥

तान्तौ कित्ति ॥ हित्वा । क्त्वीति किम्? । हीनः । नीन्येव । प्रहाय ॥

जृव्रश्च्योः क्त्वि ॥ ४ । ४ । ४१ ॥

आदिरिट् । जरित्वा २ । व्रश्चित्वा ॥

ऊदितो वा ॥ ४ । ४ । ४२ ॥

परस्य क्त्व आदिरिट् । दान्त्वा । दमित्वा ॥

क्रमः क्त्वि वा ॥ ४ । १ । १०६ ॥

धुडादौ दीर्घः । क्रान्त्वा । क्रन्त्वा । धुटीत्येव । क्रमित्वा । क्षुधवस इतीट् । क्षुधित्वा । उषित्वा । लुभ्यञ्चेरितीट् । लुभित्वा । अञ्चित्वा । पूङ्क्लिशिभ्यो नवा । पूत्वा । पवित्वा । क्लिष्ट्वा । क्लिशित्वा ॥

ज्यश्च यपि ॥ ४ । १ । ७६ ॥

येगो य्वृत् । प्रज्याय । प्रवाय ।

व्य ॥ ४ । १ । ७७ ॥

यपि य्वृत् । प्रव्याय ।

सपरेर्वा ॥ ४ । १ । ७८ ॥

व्यो यपि य्वृत् । संव्याय । संवीय । परिव्याय । परिवीय ।

यपि ॥ ४ । २ । ५६ ॥

यमिरमिनमिगमिहनिमनिवनतितनादेर्लुक् ॥ प्रहत्य । प्रमत्य । प्रतत्य । प्रसत्य ।

वा मः ॥ ४ । २ । ५७ ॥

यम्यादीनां मान्तानां यपि वा लुक् ॥ प्रयत्य । प्रयम्य । विरत्य । विरम्य । प्रणत्य । प्रणम्य । आगत्य । आगम्य ॥

लघोर्यपि ॥ ४ । ३ । ८६ ॥

णेरय् ॥ ...इति किम् ? । प्रतिपाद्य ॥

वाऽऽप्नो ॥ ४ । ३ । ८७ ॥

णेर्यप्यय् । माप्य । माप्य । आप्नोरिति किम् ? । अध्याप्य ।

क्षे क्षीः ॥ ४ । ३ । ८९ ॥

यपि । मक्षीय ॥

रणम् चाभीक्ष्ण्ये ॥ ५ । ४ । ४८ ॥

परकालेन तुल्यकर्तृके प्राक्कालेऽर्थे धातोः सम्बन्धे क्त्वा ॥ भोज भोजं याति । भुक्त्वा भुक्त्वा याति ।

वाऽपगुरो णमि ॥ ४ । २ । ५ ॥

सन्ध्यक्षरस्यात् । अपगारमपगारम् । अपगोरमपगोरम् ॥

पूर्वाग्रेप्रथमे ॥ ५ । ४ । ४९ ॥

उपपदे परकालेन तुल्यकर्तृके प्राक्कालेऽर्थे धातोः सम्बन्धे रणम् वा । अनाभीक्ष्ण्यार्थं वचनम् । पूर्वभोजं याति, पूर्वं भुक्त्वा । अग्रे भोजम् । अग्रे भुक्त्वा । प्रथमभोजम् । प्रथमं भुक्त्वा ।

अन्यथैवकथमित्थम कृगोऽनर्थकात् ॥ ५ । ४ । ५० ॥

तुल्यकर्तृकेऽर्थे रणम वा । अन्यथाकारम्, एवङ्कारम्, कथङ्कारम्, इत्थङ्कारं भुङ्क्ते । पक्षे क्त्वैव । अनर्थकादिति किम् ? अन्यथा कृत्वा शिरो भुङ्क्ते ।

यथातथादीर्ष्योत्तरे ॥ ५ । ४ । ५१ ॥

तुल्यकर्तृकार्थादनर्थकात्कृगो धातोः सम्बन्धे रणम् वा । कथं त्वं भोक्ष्यस इति पृष्टोऽसूयया तम्प्रत्याह, यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन । ईर्ष्योत्तर इति किम् ? । यथा कृत्वाऽहं भोक्ष्ये तथा द्रक्ष्यसि ॥

शापे व्याप्यात् ॥ ५ । ४ । ५२ ॥

गम्ये तुल्यकर्तृकार्थात् कृगो धातोः सम्बन्धे रुणम् वा ॥ चोरङ्कारमाक्रोशति । शाप इति किम् ? । चौरं कृत्वा हेतुभिः कथयति।

स्वाद्वर्थाददीर्घात् ॥ ५ । ४ । ५३ ॥

व्याप्यात्परात्तुल्यकर्तृकार्थात्करोतेर्धातोः सम्बन्धे रुणम् वा ॥ स्वादुङ्कारं भुङ्क्ते । मिष्टङ्कारं भुङ्क्ते । पक्षे, स्वादुं कृत्वा । अदीर्घादिति किम् ? । स्वाद्वीं कृत्वा यवागू भुङ्क्ते ॥

विदृग्भ्यः कार्त्स्न्ये णम् ॥ ५ । ४ । ५४ ॥

कार्त्स्न्यवतो व्याप्यात् तुल्यकर्तृके प्राक्कालेऽर्थे धातोः सम्बन्धे वा ॥ अतिथिवेदं भोजयति । कन्यादर्शं वरयति। कार्त्स्न्ये इति किम् ? । अतिथिं विदित्वा भोजयति ।

यावतो विन्दजीवः ॥ ५ । ४ । ५५ ॥

कार्त्स्न्यवतो व्याप्यात् तुल्यकर्तृकात् धातोःसम्बन्धे णम्वा । यावद्वेदं भुङ्क्ते । यावज्जीवमधीते ॥

चर्मोदरात्पूरेः ॥ ५ । ४ । ५६ ॥

व्याप्यात्तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा । चर्मपूरमास्ते । उदरपूरं शेते ॥

वृष्टिमाने ऊलुक् चास्य वा ॥ ५ । ४ । ५७ ॥

व्याप्यात्पूरयतेर्णम्वा समुदायेन गम्ये धातोः सम्बन्धे ॥ गोष्पदप्रम्, गोष्पदपूरं वृष्टो देवः ।

चेलार्थात्क्नोपेः ॥ ५ । ४ । ५८ ॥

व्याप्यात्तुल्यकर्तृकार्थाद्वृष्टिमाने गम्ये धातोःसम्बन्धे णम्वा ॥

चेलक्नोपं वृष्टो मेघः ॥

गात्रपुरुषात्स्नः ॥ ५ । ४ । ५९ ॥

तुल्यकर्तृकार्थाद्वृष्टिमाने गम्ये धातोः सम्बन्धे णम्वा ॥ गात्रस्नायं वृष्टः । पुरुषस्नायं वृष्टः ॥

शुष्कचूर्णरूक्षात्पिषस्तस्यैव ॥ ५ । ४ । ६० ॥

व्याप्याण्णम्वा धातोः सम्बन्धे ॥ शुष्कपेषं पिनष्टि । एवं चूर्णपेषम् । रूक्षपेषम् ॥

कृग्महोऽकृतजीवात् ॥ ५ । ४ । ६१ ॥

व्याप्यात्तस्यैव धातोः सम्बन्धे णम्वा ॥ अकृतकारं करोति । जीवग्राहं गृह्णाति ॥

निमूलात्कषः ॥ ५ । ४ । ६२ ॥

व्याप्यात्तस्यैव सम्बन्धे णम्वा ॥ निमूलकाषं कषति ।

हनश्च समूलात् ॥ ५ । ४ । ६३ ॥

व्याप्यात्कषेस्तस्यैव सम्बन्धे णम्वा ॥ समूलघातं हन्ति । समूलकाषं कषति ।

करणेभ्यः ॥ ५ । ४ । ६४ ॥

हन्तेस्तस्यैव सम्बन्धे णम्वा ॥ पाणिघातं कुड्यमाहन्ति ॥

स्वस्नेहनार्थात्पुषपिषः ॥ ५ । ४ । ६५ ॥

करणार्थात्तस्यैव सम्बन्धे णम्वा ॥ स्वपोषं पुष्णाति । एवमात्मपोषम् । उदपेषं पिनष्टि । एवं क्षीरपेषम् ॥

हस्तार्थाद् ग्रहवर्तिवृतः ॥ ५ । ४ । ६६ ॥

करणवाचिनस्तस्यैव सम्बन्धे णम्वा ॥ [illegible] गृह्णाति । एवं

करग्राहम् । हस्तवर्त्तं वर्तयति । करवर्त्तं वर्त्तते ॥

वन्धेर्नाम्नि ॥ ५ । ४ । ६७ ॥

वन्धेरिति प्रकृतिर्नामविशेषणं च, वन्धेर्बन्धनस्य यन्नाम संज्ञा तद्विषयात्करणार्थात्पराद् वन्धेस्तस्यैव सम्बन्धे णम्वा । क्रौञ्चबन्धम्बद्ध ।

आधारात् ॥ ५ । ४ । ६८ ॥

बन्धेस्तस्यैव सम्बन्धे णम्वा ॥ चारकबन्धम्बद्धः ॥

कर्तुर्जीवपुरुषान्नश्वहः ॥ ५ । ४ । ६९ ॥

यथासङ्ख्य तस्यैव सम्बन्धे णम्वा ॥ जीवनाशन्नश्यति । पुरुषनाहं वहति । कर्तुरिति किम् ? । जीवेन नश्यति ॥

ऊर्ध्वात्पूः शुषः ॥ ५ । ४ । ७० ॥

कर्तुस्तस्यैव सम्बन्धे णम्वा ॥ ऊर्ध्वपूरं पूर्यते । ऊर्ध्वशोषं शुष्यति ॥

व्याप्याच्चेवात् ॥ ५ । ४ । ७१ ॥

कर्तुर्धातोस्तस्यैव सम्बन्धे णम्वा ॥ सुवर्णनिधायं निहितः । काकनाशं नष्टः ॥

उपात्किरो लवने ॥ ५ । ४ । ७२ ॥

धातोस्सम्बन्धे णम्वा ॥ लवन इति वचनात्तस्यैवेति निवृत्तम् । उपस्कारं मद्रका लुनन्ति । लवन इति किम् ? । उपकीर्य याति ॥

दशेस्तृतीयया ॥ ५ । ४ । ७३ ॥

योगे तुल्यकर्तृकार्थादुपपूर्वाद्दशेर्धातोः सम्बन्धे णम्वा ॥ मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदश्य भुङ्क्ते ॥

हि... ॥ ५ । ४ । ७४ ॥

धातोर्थान्तरेण तुल्यकर्तृकार्थात्तृतीयान्तेन योगे णम्वा ॥ दण्डेनोपघातं दण्डोपघातं, दण्डेनोपहत्य च गा सादयति। एकाप्या- दिति किम् ? । दण्डेनोपहत्य चौरं गोपालको गा रोधयति ॥

## उपपीडरुधकर्षस्तत्सप्तम्या ॥ ५ । ४ । ७५ ॥

योगे तुल्यकर्तृकार्थाद्धातोस्सम्बन्धे णम्वा ॥ पार्श्वाभ्यामुपपीडं, पार्श्वोपपीडं शेते । पार्श्वयोरुपपीडं, पार्श्वोपपीडं शेते । व्रजेनोपरोधं, व्रजोपरोधं, व्रजे उपरोधं, व्रजोपरोधं गा स्थापयति। पाणिनोपकर्षं पाण्युपकर्षं, पाणावुपकर्षं, पाण्युपकर्षं धानाः ॥

## प्रमाणसमासत्त्योः ॥ ५ । ४ । ७६ ॥

गम्ययोस्तृतीयान्तेन सप्तम्यन्तेन च योगे तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा ॥ आयाममानं प्रमाणम् । समासत्तिः संरम्भपूर्वकं सन्निकर्षः । द्व्यङ्गुलेनोत्कर्षं द्व्यङ्गुलोत्कर्षं, द्व्यङ्गुले उत्कर्षं द्व्यङ्गुलोत्कर्षं गण्डिकाश्छिनत्ति । केशग्राहं केशग्राहं, केशेषु ग्राहं, केशग्राहं युध्यन्ते । पक्षे, द्व्यङ्गुलेनोत्कृष्य गण्डिकाश्छिनत्ति।

## पञ्चम्या त्वरायाम् ॥ ५ । ४ । ७७॥

गम्यायां तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा ॥ शय्याया उत्थायं, शय्योत्थायं धावति । पक्षे, शय्याया उत्थाय धावति । त्वरायामिति किम् ? । आसनादुत्थाय याति ॥

## द्वितीयया ॥ ५ । ४ । ७८ ॥

योगे त्वरायां गम्यायां तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा ॥ लोष्टग्राहं, लोष्टग्राहं युध्यन्ते ॥

## स्वाङ्गेनाध्रुवेण ॥ ५ । ४ । ७९ ॥

द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा ॥ यस्मिन्नङ्गे छिन्ने भिन्ने वा प्राणी न म्रियते तदध्रुवम् । भ्रुवौ विक्षेप

भ्रूविक्षेप भ्रुवौ विक्षिप्य वा जल्पति । स्वाङ्गेनेति किम् ? । कफमुन्मूल्य जल्पति । अध्रुवेणेति किम् ? । शिर उत्क्षिप्य वक्ति ॥

## परिक्लेश्येन ॥ ५ । ४ । ८० ॥

स्वाङ्गेन द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा ॥ उरासि प्रतिपेषम्, उरःप्रतिपेषम्, उरासि प्रतिपेष्य वा युध्यन्ते ॥

## विशपतपदस्कन्दो वीप्साभीक्ष्ण्ये ॥ ५ । ४ । ८१ ॥

द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद् गम्ये धातोः सम्बन्धे णम्वा ॥ गेहं गेहमनुप्रवेश, गेहानुप्रवेशमास्ते । गेहमनुप्रवेशमनुप्रवेश, गेहानुप्रवेशमास्ते । गेहं गेहमनुप्रपातं, गेहानुप्रपातमास्ते । गेहमनुप्रपातमनुप्रपात, गेहानुप्रपातमास्ते । एवं गेहानुप्रपादम् ३ । गेहानुस्कन्दम् ३ ॥

## कालेन तृष्यस्वः क्रियान्तरे ॥ ५ । ४ । ८२ ॥

द्वितीयान्तेन योगे धातो सम्बन्धे णम्वा । द्व्यहतर्षं, द्व्यहतर्षं गावः पिबन्ति । द्व्यहमत्यास द्व्यहात्यास गाव पिबन्ति ॥

## नाम्ना ग्रहादिश ॥ ५ । ४ । ८३ ॥

द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा । नामनि ग्राह, नामग्राहमाह्वयति । नामान्यादेश, नामादेशं दत्ते । पक्षे, नाम गृहीत्वा दत्ते ॥

## कृगोऽव्ययेनानिष्टोक्तौ क्त्वाणमौ ॥ ५ । ४ । ८४ ॥

योगे तुल्यकर्तृकार्थाद् गम्यायां धातोः सम्बन्धे। ब्राह्मण ! पुत्रस्ते जात', वृषल ! किं तर्हि नीचैःकृत्य, नीचैःकार कथयसि, उच्चैर्नाम प्रियमाख्येयम्। अ[illegible]वित[illegible] ? । उच्चैः कृत्वाऽऽचष्टे, ब्राह्मण ! पुत्रस्ते जात [illegible]ति किम् ? । ब्राह्मण ! पुत्रस्ते

धातोर्यात्वन्तरेण तुल्यकर्तृकार्थात्तृतीयान्तेन योगे णम्वा दण्डेनोपघातं दण्डोपघातं, दण्डेनोपहत्य च गाः सादयति। एकाप्य दिति किम् ? ।। दण्डेनोपहत्य चौरं गोपालको गाः खेटयति ॥

## उपपीडरुधकर्षस्तत्सप्तम्या ॥ ५ । ४ । ७५ ॥

योगे तुल्यकर्तृकार्थाद्धातोस्सम्बन्धे णम्वा ॥ पार्श्वाभ्यामुपपीडं पार्श्वोपपीडं शेते । पार्श्वयोरुपपीडं, पार्श्वोपपीडं शेते । व्रजेनोपरोधं व्रजोपरोधं, व्रजे उपरोधं, व्रजोपरोधं गा स्थापयति। पाणिनोपकर्षं पाण्युपकर्षं, पाणावुपकर्षं, पाण्युपकर्षं गृह्णाति ॥

## प्रमाणसमासत्त्योः ॥ ५ । ४ । ७६ ॥

गम्ययोस्तृतीयान्तेन सप्तम्यन्तेन च योगे तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा ॥ आयाममानं प्रमाणम् । समासत्तिः संरम्भपूर्वकः सन्निकर्षः । द्व्यङ्गुलेनोत्कर्षं द्व्यङ्गुलोत्कर्षं, द्व्यङ्गुले उत्कर्षं द्व्यङ्गुलोत्कर्षं गण्डिकाश्छिनत्ति । केशैर्ग्राहं केशग्राहं, केशेषु ग्राहं केशग्राहं युध्यन्ते । पक्षे, द्व्यङ्गुलेनोत्कृष्य गण्डिकाश्छिनत्ति।

## पञ्चम्या त्वरायाम् ॥ ५ । ४ । ७७॥

गम्यायां तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा ॥ शय्याया उत्थायम्, शय्योत्थायं धावति । पक्षे, शय्याया उत्थाय धावति । त्वरायामिति किम् ? । आसनादुत्थाय याति ॥

## द्वितीयया ॥ ५ । ४ । ७८ ॥

योगे त्वरायां गम्यायां तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा। लोष्टान्ग्राहं, लोष्टग्राहं युध्यन्ते ॥

## स्वाङ्गेनाध्रुवेण ॥ ५ । ४ । ७९ ॥

द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा । यस्मिन्नङ्गे छिन्ने भिन्ने वा प्राणी न म्रियते तदध्रुवम् । भ्रुवौ विक्षेप

भ्रूविक्षेप भ्रुवौ विक्षिप्य वा जल्पति। स्वाङ्गेनेति किम्?। कफमुन्मूल्य जल्पति। अध्रुवणेति किम्?। शिर उत्क्षिप्य वक्ति ॥

## परिक्लेश्येन ॥ ५ । ४ । ८० ॥

स्वाङ्गेन द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा ॥ उरसि प्रतिपेषम्, उरःप्रतिपेषम्, उरांसि प्रतिपेष्य वा युध्यन्ते ॥

## विशपतपदस्कन्दो वीप्साभीक्ष्ण्ये ॥ ५ । ४ । ८१ ॥

द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद् गम्ये धातोः सम्बन्धे णम्वा ॥ गेहं गेहमनुप्रवेश, गेहानुप्रवेशमास्ते। गेहमनुप्रवेशमनुप्रवेश, गेहानुप्रवेशमास्ते। गेहं गेहमनुप्रपात, गेहानुप्रपातमास्ते। गेहमनुप्रपातमनुप्रपातं, गेहानुप्रपातमास्ते। एवं गेहानुप्रपादम् २। गेहानुस्कन्दम् ३ ॥

## कालेन तृष्यस्व क्रियान्तरे ॥ ५ । ४ । ८२ ॥

द्वितीयान्तेन योगे धातोः सम्बन्धे णम्वा। द्व्यहतर्षं, द्व्यहतर्षं गावः पिबन्ति। द्व्यहमत्यास द्व्यहात्यास गावः पिबन्ति ॥

## नाम्ना ग्रहादिशः ॥ ५ । ४ । ८३ ॥

द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद्धातोः सम्बन्धे णम्वा। नामनि ग्राह, नामग्राहमाह्वयति। नामान्यादेशं, नामादेशं दत्ते। पक्षे, नाम गृहीत्वा दत्ते ॥

## कृगोऽव्ययेनानिष्टोक्तौ क्त्वाणमौ ॥ ५ । ४ । ८४ ॥

योगे तुल्यकर्तृकार्थाद् गम्यायां धातोः सम्बन्धे। ब्राह्मण। पुत्रस्ते जातः, दृपल। किं तर्हि नीचैःकृत्य, नीचैःकारं न्ययसि, उच्चैर्नाम प्रियमाख्येयम्। अनिष्टोक्ताविति किम्?। उच्चैः कृत्वाऽऽचष्टे, ब्राह्मण! पुत्रस्ते जात इति। अव्ययेनेति किम्?। ...

किं नहिं पृथक् ! मन्दं कृत्वा कथयति ॥

## तिर्यचाऽपवर्गे ॥ ५ । ४ । ८५ ॥

गम्येऽव्ययेन योगे तुल्यकर्तृकार्थात् कृगो धातोः सम्बन्धे ख्णम् क्त्वा च स्याताम् । अपवर्गः क्रियासमाप्तिः । तिर्यक्कृत्य, तिर्यक्कारमास्ते । अपवर्ग इति किम् ? । तिर्यक्कृत्वा काष्ठं गतः ॥

## स्वाङ्गतश्च्व्यर्थे नानाविनाधार्थेन भुवश्च ॥ ५ । ४ । ८६ ॥

योगे तुल्यकर्तृकार्थात्कृगो धातोः सम्बन्धे क्त्वाणमौ । मुखतं भूत्वा, मुखतोभूय, मुखतोभावमास्ते। नाना भूत्वा, नानाभूय, नानाभावं गतः । विना भूत्वा, विनाभूय, विनाभावं गतः । द्विधा भूत्वा द्विधाभूय, द्विधाभावमास्ते । एवं पार्श्वतः कृत्वा, पार्श्वतःकृत्य पार्श्वतःकारं शेते इत्यादि । च्व्यर्थ इति किम् ? । नाना कृत्वा भक्ष्याणि भुङ्क्ते ॥

## तूष्णीमा ॥ ५ । ४ । ८७ ॥

योगे तुल्यकर्तृकार्थाद् भुवो धातोः सम्बन्धे क्त्वाणमौ । तूष्णीं भूत्वा । तूष्णींभूय । तूष्णींभावमास्ते ॥

## आनुलोम्येऽन्वचा ॥ ५ । ४ । ८८ ॥

अव्ययेन योगे गम्ये तुल्यकर्तृकार्थाद्भुवो धातोः सम्बन्धे क्त्वाणमौ । अन्वग्भूत्वा, अन्वग्भूय अन्वग्भावमास्ते । आनुलोम्य इति किम् ? । अन्वग्भूत्वा तिष्ठति ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलाराधकशान्तमूर्त्याप्तसंविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहैमप्रभायामुत्तरार्द्धे उत्तरकृदन्तप्रक्रिया ॥

## प्रशस्ति ॥

मूत्रालम्बनमात्रमापि तनुते चित्रां मतिं कुत्रचित्
सन्धौ न प्रथिमानमेति नियतैर्लिङ्गैः पुनर्भासते ॥
याख्याताऽव्ययधातुभिः सह समासेऽभीष्टकृत्प्रत्यये
लघ्वी कारकप्रत्यये भवतु सा हेमप्रभैषा मुदे ॥ १ ॥

येषां नार्थविशेषसङ्कटविधौ सामर्थ्यमस्त्युद्भटं
वाञ्छा साधुपदप्रयोगविषयाऽस्त्यर्थे प्रसिद्धेऽखिले ॥
आत्मीयत्वमुपागताऽतिमहता यत्नेन तेषां मुद
लघ्वीयं तनुते परीक्षितपदा हेमप्रभा सर्वतः ॥ २ ॥

छद्मस्थेषु सदा स्खलद्गतितया दोषप्रबन्धान्वये
नो हास्यास्पदमत्र दोषघटनाया स्यामहं धीमताम् ॥
नो प्रार्थ्याः कृतिनो निसर्गगरिमावासा मया शोधने
तेषां दोषगणप्रमार्जनविधिस्वाभाविकोऽयं यतः ॥ ३ ॥

श्रीवीरस्य समस्ततत्त्वविदुषो निर्मूलमुन्मूलित-
स्वान्तध्वान्तगणस्य पूज्यचरणद्वन्द्वस्य शक्रादिभिः ॥
भव्याऽवाप्यपरीक्षितागमप्रमुक्तासाक्षकीर्तेर्विभोः
पट्टं भव्यकदम्बपूज्यममलं विद्योततं सर्वदा ॥ ४ ॥

तत्रासौ गणभृन्मणिः सुमथिताईन्धर्मचिन्तामणिः
सन्दिष्टागममुक्तिमार्गधरणिर्भव्याम्बुजाशामणिः ॥
निर्ग्रन्थाभिधगच्छमच्छमसमं सूरिः सुधर्माभिधः
प्रत्यप्राययदादिमं गुणगणारामं सुमान्यं सताम् ॥ ५ ॥

सूरिः सुस्थितसञ्ज्ञको जिनमतप्रागल्भ्यकान्तालयो
वादिव्रातमतार्थसार्थदलनाकुण्ठोल्लसद्धीमथः ॥

तत्रानुप्रचकार कोटिकपदाख्येय द्वितीय मही-
ह्लास गच्छमतुच्छमानममलाचारप्रचारोज्ज्वलम् ॥ ६ ॥

चन्द्रस्तत्र जिनागमोदधिमहात्म्यैकदत्तू्य'
सूरिश्चन्द्रपदाभिधेयममल गच्छ तृतीय व्यधात् ॥
उत्कृष्टं वनवासिगच्छमतनोत्सामन्तभद्राभिधः
सूरिस्तुर्यमनु महत्तपसाऽव्यासप्रभावस्तत ॥ ७ ॥

तत्रैवानु मनिप्रकर्षविहितानेकान्ततत्त्वप्रथ
महर्द्व्यातीतगुणैकसद्म नयविच्छ्रीसर्वदेवाभिध ॥
सूरि' पञ्चममिष्टपद्धतिगत गच्छं वटाख्य व्यधात्
सच्छाय भवतापखिन्नजननाशान्त्यद्वितीयास्पदम् ॥ ८ ॥

तत्रानुज्झितपूर्वपद्धतिरिति स्याद्वादद्वयैकभू'
श्रद्धाराधितवीरदर्शितपथानुत्क्रान्तकल्पव्रज ॥
सूरि षष्ठमतुच्छमक्षरपद गच्छ तपाख्य जग-
च्चन्द्राख्योऽनु ततान भव्यजनतामोदप्रद निर्मलम् ॥ ९ ॥

गच्छे तत्पदनारावनल्पनिपुणप्रागल्भ्यलब्धोदये
सुस्फीतामृतसारकम्रफलके सत्पञ्चकल्पप्रथे ॥
भव्यालिप्रकराम्बिते सुमनसारम्भादियोगोज्ज्वले
तत्रानेकदलान्वितागपथ मुश्लिष्टशाखोत्कर ॥ १० ॥

श्रीहीरेण नयागमार्थमननाद्वीरेण वीरार्थिना-
मारणाप्तगुणोत्करेण महिमागारेण मुक्त्यर्थिना ॥
भव्याम्भोजदिवाकरेण गमिते काष्ठा परां सूरिणा
सर्वोगान्विविधिवजेन विदुषाराद्येन सत्कीर्तिना ॥ ११ ॥

देवेनागमरत्नसिन्ध्वधिगतानर्घार्थचिन्तामणि-
प्रद्योतेन गुणप्रकर्षसरसि रम्या गतेनार्थिनाम् ॥

सत्कल्पाभ्युदयैकतानमतिना सूर्यादिभिख्यातता
तीर्थौन्नत्यप्रभासकेन मथिते भव्येषु सद्भावतता ॥ १२ ॥

सिंहेनापरतन्त्रसिन्धुरगणोत्सर्पन्मदध्वंसिना
सद्गत्यावनतत्परेण लसताऽत्यन्तात्मवीर्याश्रयात् ॥
श्रीर्द्धिं कामपि भापितेऽतिगहनागम्याद्वितीयस्थिति
सुरपत्तगमलक्षिता विदलितैकान्तप्रचारोद्यमाम् ॥ १३ ॥

सन्तत्यान्वयिनि श्रुताभितधियो नीत्येकतानात्मनो
निर्व्याजामलजैनधर्मघटनाभूतेरभूत्यर्थिनः ॥
सद्' साधुगुणैर्निजोऽनिधियेराराधितस्याभित
श्रीवृद्धेर्विजयोत्तरस्य सुगुरोरिष्टक्रमोपासिन. ॥ १४ ॥

विध्युल्लासिविबाधयोगकरणप्राप्ताज्ययोगोन्नते'
सिद्धान्तापरतत्त्वबुद्धिकलिताशेषान्यनीत्यम्बुधे ॥
सूरेर्नेम्यभिधस्य युक्तरचना जातप्रथेयं सता—
माकल्पं कृतिरातनोतु विदुषा मोद सम्मुद्वीक्षिता ॥ १५ ॥

इति श्रीतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचित

श्रीलघुहेमप्रभा—व्याकरण सम्पूर्णम्

## ॥ श्रीलघुहेमप्रभाव्याकरणोत्तरार्ध-सूत्राणां सूची ॥

| पत्रम् । | सूत्रम् ॥ | अ० पा० सूत्रांकः ॥ |
|---|---|---|
| ५७ | आग्निर्याण | ४ । ३ । १०७ ॥ |
| १६७ | आशिप्यकन् | ६ । १ । ७० ॥ |
| ८ | आशिष्याणी पञ्चम्यौ | ५ । ४ । ३८ ॥ |
| २ | आशीः स्यात्-सीमहि | ३ । ३ । १३ ॥ |
| १८९ | आसीनः | ४ । ४ । ११५ । |
| १५८ | आयुष्य-म | ६ । १ । ३० ॥ |
| २६१ | आस्पदित्रज्यज क्यप् | ५ । ३ । ९७ ॥ |
| २५४ | आहावो निपानम् | ५ । ३ । ४४ ॥ |
| | इ | |
| २६६ | ईकश्चित्र स्वरूपार्थे | ५ । ३ । १३८ ॥ |
| ६७ | इको वा | ४ । ३ । २६ ॥ |
| ८ | इदित कर्त्तरि | ३ । ३ । ८२ ॥ |
| १०२ | इदितो व्यञ्जना-त् | ५ । २ । ४४ ॥ |
| २५१ | इदोऽपाग्ने-द्वा | ५ । ३ । १९ ॥ |
| १५४ | इच्छार्थे कर्मण. सप्तमी | ५ । ४ । २९ ॥ |
| १५४ | इच्छार्थे सप्तमीपञ्चम्यौ | ५ । ४ । २७ ॥ |
| १३ | इञ इति | ४ । ३ । ७१ ॥ |
| ७९ | इट् सिजाशिषो-ने | ४ । ४ । ३६ ॥ |
| १० | इडेत्पुसि-न्तर् | ४ । ३ । ९४ ॥ |
| ५७ | इण | २ । १ । ५१ ॥ |
| ५७ | इणिकोर्गा. | ५ । ४ । २३ ॥ |
| २५८ | इणोऽभ्रेषे | ४ । ३ । ७० ॥ |
| ११ | इन्ध्यसयोगा-द्वत् | ४ । ३ । २१ ॥ |
| १७४ | इरंमद | ५ । १ । १२७ ॥ |
| ८९ | ईर्व्यादि. | ४ । २ । ९८ ॥ |

| पत्रम | सूत्रम ॥ | अ० पा० सूत्रांक ॥ |
|---|---|---|
| १३० | उपसर्गादस्योहो वा | ३ । ३ । २५ ॥ |
| २६२ | उपसर्गादात | ५ । ३ । ११० ॥ |
| १६६ | उपसर्गाद्दानो–द्य | ५ । ३ । ५६ ॥ |
| १३० | उपसर्गाद्दो ह्रस्वः | ४ । ३ । १०६ ॥ |
| २५९ | उपसर्गाद् कि | ५ । ३ । ८७ ॥ |
| १९५ | उपसर्गाद्ध–द्य | ५ । २ । ६९ ॥ |
| १३३ | उपात् | ३ । ३ । ५८ ॥ |
| २७३ | उपात् किरो लवने | ५ । ४ । ७२ ॥ |
| १६७ | उपात् स्तुतौ | ४ । ४ । १०५ ॥ |
| १३७ | उपास्थ | ३ । ३ । ८३ ॥ |
| ४८ | उपान्त्यूपासमवाय–र | ४ । ४ । ९२ ॥ |
| ४० | उपान्त्यस्यासमा–दे | ४ । २ । ३५ ॥ |
| २५ | उपान्त्ये | ४ । ३ । ३४ ॥ |
| ६५ | उवर्णात् | ४ । ४ । ५८ ॥ |
| १५८ | उवर्णाद्वावश्यके | ५ । १ । ११९ ॥ |
| ३३ | उभौ | ४ । १ । २ ॥ |
| | ऊ | |
| २६९ | ऊदितो वा | ४ । ४ । ४२ ॥ |
| १०८ | ऊदुपो णी | ४ । २ । ४० ॥ |
| २७३ | ऊर्ध्वात् पूःशुष | ५ । ४ । ७० ॥ |
| १७५ | ऊर्ध्वादिभ्य कर्तु | ५ । १ । १२६ ॥ |
| | ऋ | |
| ७० | ऋ शृदृम | ४ । ४ । २० ॥ |
| १६ | ऋत | ४ । ४ । ७९ ॥ |
| ६१ | ऋत स्वरे वा | ४ । ३ । ४३ ॥ |

ख



ग

| पत्रम्. | सूत्रम् ॥ | अ० पा० सूत्रांकः ॥ |
|---|---|---|
| ११७ | चरफलाम् | ४ । १ । ५३ ॥ |
| १६९ | चराचरचला-वा | ४ । १ । १३ ॥ |
| १६२ | चरेराङस्त्वगुरौ | ५ । १ । ३१ ॥ |
| १७५ | चरेष्टः | ५ । १ । १३८ ॥ |
| २७१ | चर्मोदरात्पूरे | ५ । ४ । ५६ ॥ |
| १९२ | चलशब्दार्था-त् | ५ । २ । ४३ ॥ |
| १४१ | चल्याहारार्थेङ्-नः | ३ । ३ । १०८ ॥ |
| १०३ | चहणः शाठ्ये | ४ । २ । ३१ ॥ |
| ११८ | चायः कीः | ४ । १ । ८६ ॥ |
| १६५ | चिक्लिद्चक्नसम् | ४ । १ । १४ ॥ |
| २५८ | चितिदेहा-दे | ५ । ३ । ७९ ॥ |
| १०८ | चिते वा | ४ । २ । ४१ ॥ |
| १५३ | चित्रे | ५ । ४ । १९ ॥ |
| १०९ | चिस्फुरोर्नवा | ४ । २ । १२ ॥ |
| १२६ | चीवरात्परीधार्जने | ३ । ४ । ४१ ॥ |
| ९३ | चुरादिभ्यो णिच् | ३ । ४ । १७ ॥ |
| ७९ | चे: किर्वा | ४ । १ । ३६ ॥ |
| २७१ | चेलार्थात् क्नोपे | ५ । ४ । ५८ ॥ |
| २६६ | च्व्यर्थे कर्त्राप्या-गः | ५ । ३ । १४० ॥ |
| १२४ | च्व्यर्थे भृशादेः स्तो: | ३ । ४ । २९ ॥ |
| | छ | |
| १७७ | छदेरिस्मन्त्रट्क्वौ | ४ । २ । ३३ ॥ |
| २५७ | छन्दोनाम्नि | ५ । ३ । ७० ॥ |
| १८६ | छागोर्वा | ४ । ४ । १२ ॥ |

| पत्रम् । | सूत्रम् ॥ | अ० पा० सूत्रांकः ॥ |
|---|---|---|
| १३९ | ज्ञोऽनुपसर्गात् | ३ । ३ । ९६ ॥ |
| २६९ | ञ्यश्च यपि | ४ । १ । ७६ ॥ |
| ७३ | ञ्यान्यः षिदति | ४ । १ । ८१ ॥ |
| ५२ | ञ्यान्येभ्यञ्यचि-रि | ४ । १ । ७१ ॥ |
| १०८ | ञ्रग्ह्लल्लल-वा | ४ । २ । ३७ ॥ |
| | ञ | |
| १४३ | ञिरव्णमोर्शे | ४ । ४ । १०६ ॥ |
| ७६ | ञिद् ते पद-च | ३ । ४ ६६ ॥ |
| ६३ | ञिणवि घन् | ४ । ३ १०१ ॥ |
| १९ | ञ्णिति | ४ । ३ ९० ॥ |
| ९८ | ञ्णिति घात् | ४ । ३ १०० ॥ |
| | ट | |
| १६७ | टनण् | ५ । १ । ६७ ॥ |
| १७ | टुयेत्रागाच्छासो वा | ४ । ३ । ६७ ॥ |
| १८ | टुरेभ्वर्ही | ३ । ४ । ५९ ॥ |
| २५९ | टुरितोऽथुः | ५ । ३ । ८३ ॥ |
| | ड | |
| १७५ | डाव्लोहिता-पित् | ३ । ४ । ६० ॥ |
| १८२ | डीयश्व्यैदितः क्तयो | ४ । ४ । ६१ ॥ |
| २५९ | डुरितस्त्रिमक्-तम् | ६ । ३ । ८४ ॥ |
| | ण | |
| १६८ | णकतृची | ४ । १ । २८ ॥ |
| १११ | णारज्ञाने गमु | ४ । २ । २४ ॥ |
| १२६ | णिज् बहुल-पु | ३ । २ । २२ ॥ |

| पत्रम् । | सूत्रम् ॥ | अ० पा० सूत्रांकः ॥ |
|---|---|---|
| १६० | तव्यानीयौ | ५ । १ । २७ ॥ |
| १६७ | तिक्कृतौ नाम्नि | ५ । १ । ७१ ॥ |
| ११७ | ति चोपान्त्या-दुः | ४ । १ । ५४ ॥ |
| २७६ | तिर्यचापवर्गे | ५ । ४ । ८५ ॥ |
| ३० | तिर्वा ष्ठिव | ४ । १ । ४३ ॥ |
| ६२ | तिवां णवः परस्मै | ४ । २ । ११७ ॥ |
| १०८ | तिष्ठतेः | ४ । २ । ३९ ॥ |
| १६४ | तु | ४ । ४ । ५४ ॥ |
| ८१ | तुदादेः शः | ३ । ४ । ८१ ॥ |
| १११ | तुमर्हादिच्छाया-नः | ३ । ४ । २१ ॥ |
| २७६ | तूष्णीगा | ५ । ४ । ८७ ॥ |
| १९० | तृन् शीलधर्मसाधुषु | ५ । २ । २७ ॥ |
| १९६ | तृषिधृषिस्वपो नजिङ् | ५ । २ । ८० ॥ |
| ८८ | तृह श्नादीत् | ४ । ३ । ६२ ॥ |
| १८ | तृत्रफलभजाम् | ४ । १ । २५ ॥ |
| १५७ | ते कृत्याः | ५ । १ । ४७ ॥ |
| २६० | तेर्ग्रहादिभ्यः | ४ । ४ । ३२ ॥ |
| १९० | तौ माङ्याक्रोशेषु | ५ । २ । २१ ॥ |
| १६८ | तौ सनस्तिकि | ४ । २ । ६४ ॥ |
| १५९ | त्यजयजप्रवचः | ४ । १ । ११८ ॥ |
| १७७ | त्यदाद्यन्यसमा-च | ५ । १ । १५२ ॥ |
| १६४ | त्रने वा | ४ । ४ । ३ ॥ |
| १९१ | त्रसिगृधि-क्नुः | ५ । २ । ३२ ॥ |
| ४ | त्रीणि त्रीण्यन्य-टि | ३ । ३ । १७ ॥ |

| पत्रम् ॥ | सूत्रम् ॥ | अ० पा० सूत्रांक. |
|---|---|---|
| | थ | |
| ८० | थो वा | ४ । १ । २९ ॥ |
| | द | |
| २२ | दंशसञ्ज· श्वि: | ४ । २ । ४९ ॥ |
| २७३ | दंशेस्तृतीयया | ५ । ४ । ७३ ॥ |
| १९७ | दंशेश | ५ । २ । ९० ॥ |
| १८६ | दत् | ४ । ४ । १० ॥ |
| ८० | दम्भः | ४ । १ । २८ ॥ |
| ११३ | दम्भो धिप्सीप् | ४ । २ । १८ ॥ |
| ४१ | दयायास्कासः | ३ । ४ । ४७ ॥ |
| ५९ | दरिद्रोऽद्यतन्यां वा | ४ । ३ । ७६ ॥ |
| २५१ | दधनावोर्दे -थम् | ४ । २ । ५४ ॥ |
| १६८ | दशाक | ५ । १ । ७८ ॥ |
| १११ | दागोऽस्वास्यमसारविपाते | ३ । ३ । ५३ ॥ |
| १०१ | दाधेसिशद क· | ५ । २ । ३६ ॥ |
| १८९ | दाम्नस्साद्दन्मीद् वत् | ४ । १ । २९ ॥ |
| १९६ | दिगुदृग्ज्ञ-प· | ५ । २ । ८३ ॥ |
| ७२ | दिवादे· श्यः | ३ । ४ । ७२ ॥ |
| ५८ | दिस्योरीट् | ४ । ४ । ७९ ॥ |
| ११४ | दीट. सनि वा | ४ । २ । ६ ॥ |
| ४१ | दीपजनवुध वा | ३ । ४ । ६७ ॥ |
| १२६ | दीप्तिज्ञानयत्न द | ३ । ३ । ७८ ॥ |
| ७६ | दीय दीट -रे | ४ । ३ । ९३ ॥ |
| ९१ | दीर्घमवोऽन्त्यम् | ४ । १ । १०३ ॥ |

| पत्रम् । | सूत्रम् ॥ | अ० पा० सूत्राङ्क ॥ |
|---|---|---|
| २० | नो घ्यञ्जनस्या–तः | ४ । २ । ४५ ॥ |
| १५८ | न्यङ्कृत्क–यः | ४ । १ । ११२ ॥ |
| २५४ | न्यभ्युपर्वाच्छ्रोत् | ५ । ३ । ४२ ॥ |
| २५६ | न्यवाच्छापे | ५ । ३ । ५६ ॥ |
| २५२ | न्यादौ नवा | ५ । ३ । २४ ॥ |
| २६५ | न्यायावाया–स्म | ५ । ३ । १३४ ॥ |
| २५७ | न्युदो ग्रः | ५ । ३ । ७२ ॥ |
| | प | |
| १४४ | पचिदहेः | ३ । ४ । ८७ ॥ |
| १ | पञ्चमी–आमैद् | ३ । ३ । ८ ॥ |
| १४० | पञ्चम्यर्थहेतौ | ५ । ३ । ११ ॥ |
| ६२ | पञ्चम्या कृत् | ३ । ४ । ५२ ॥ |
| २७४ | पञ्चम्यात्वरायाम् | ५ । ४ । ७७ ॥ |
| २५३ | पणेर्माने | ५ । ३ । ३२ ॥ |
| २५० | पदरुजविश–घञ् | ५ । ३ । १६ ॥ |
| १४० | पदान्तरगम्ये वा | ३ । ३ । ९९ ॥ |
| १६३ | पदास्वैरिवा–ग् | ५ । १ । ४४ ॥ |
| १६१ | पदेऽन्तरऽना–ने | ७ । ३ । ९३ ॥ |
| ३ | पराणी कानान–दस् | ३ । ३ । २० ॥ |
| १४० | परानोः कृगः | ३ । ३ । १०१ ॥ |
| २६७ | परावरे | ५ । ४ । ४५ ॥ |
| १३० | परापर्जे | ३ । ३ । २८ ॥ |
| २७५ | परिक्लेद्येन | ५ । ४ । ८० ॥ |
| १५९ | परिन्याप्योप–र्गौ | ५ । १ । २५ ॥ |

